॥ श्रीः ॥

श्रीमद्धनुमता विरचितं

# हनुमन्नाटकम् ।

श्रीदामोदरमिश्रेण संदर्भ्य संकलितं मिश्रमोहनविरचितदीपिकया समेतं च ।

केळकरोपाह्वलक्ष्मणात्मजेन शिवरामशास्त्रिणा यथामति परिष्कृतं संशोधितं च ।

एतच्च

श्रीकृष्णदासात्मजेन गङ्गाविष्णुना
स्वकीये "लक्ष्मीवेङ्कटेश्वर" मुद्रणागारे
मुद्रयित्वा प्रकाशितम् ।

संवत् १९५७, शकाब्दाः १८२२.

कल्याण-मुंबई.

# प्रस्तावना ।

एतद्धनुमत्कृतमिति प्रसिद्ध्या महानाटकं द्विविधम् । एकं मिश्रमधसूदनेन संदर्भितमतच्च वङ्गदेशे प्रसिद्धमिदानीं मुद्रितं विद्यते भट्टाचार्यजीवानन्देन तन्त्राङ्कम् । तथा च द्वितीयं मिश्रदामोदरेणानुबद्धमत्र चतुर्दशाङ्कात्मकं महाराष्ट्रदेशे प्रसिद्धं तच्च मिश्रमोहनदासविरचितदीपिकाटीकासमेतमिदानीं मुद्रितुमुद्युक्ता वयम् ।

एतन्महानाटकं कस्य कृतिरिति विचारस्त्वाख्यायिकयाऽन्तिमश्लोकेन च आवृतः । परं त्वेव मन्यामहे । नायमककृतिको ग्रन्थः । अन्तिमश्लोकानुसारेण यदीदं वाल्मीकिकालिकं स्यात्तर्हि नह्यत्र " एषा पञ्चवटी " इत्यादिपद्यानि शोभन्ते । एवं चायमर्वाचीनकवितामांसलस्तु खलु । भोजप्रबन्धस्थो दामोदरकविस्त्वयमेवेति डाक्टरबुइल्समतं तदनुसारतस्तेनास्य दशैकादशख्रिस्ताब्दशतमिति कालोऽपि निर्णीतप्राय उक्तः ।

इदं वाल्मीकिरामायणानुसारेणैव बद्धमिति प्रसिद्धमेव । अन्यनाटकवदत्र न प्रवेशानुसारतो न्यूनाधिकत्वम् । परं च प्रायः प्रवेशनिष्क्रमणादिकमपि न । केवलमङ्कात्मकत्वादेवास्मिन्नाटकत्वम् । एतदपेक्षया गद्यपद्यात्मकत्वाच्चम्पूरित्यस्य योग्यं नाम ।

अस्मिन् ग्रन्थे च रसपूरितपद्यानां महावीरचरित्रानर्घ्यराघवप्रबोधचन्द्रोदयादिस्थपद्यवत् शैली लक्ष्यते । कुत्रचित्तान्येवेति प्रतिभाति । क्वचिदन्यकाव्यमहावीरचरितोत्तररामचरित्राभिज्ञानशाकुन्तलादिनाटकस्थान्यपि पद्यानि कथाप्रसङ्गतः पाठभेदेन नियुक्तानि तेषामत्र किंचिद्दिग्दर्शनं कुर्मः ।

तथाहि । वाल्मीकिसुन्दरकाण्डे सीतादर्शनानन्तरं लङ्कात आगतस्य मारुतेरङ्गदादीन् सीतावर्णन इयमुक्तिः—" प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ।" अत्र च सीतां प्रति रामवर्णने तनुतां गत इति कृत्वा नियुक्ता ।

महावीरचरिते जनककृतरामवर्णने—" चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो भस्मस्निग्धपवित्रलाञ्छितमुरो धत्ते त्वचं रौरवीम् । मौञ्ज्या मेखलया नियन्त्रितमधो वासश्च माञ्जिष्ठकं पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥ " इत्यस्यात्र प्रथमाङ्के परशुरामवर्णने नियोजनमस्ति ।

तथा चोत्तररामचरित्रपञ्चमाङ्के लवचन्द्रकेतुसंवादे लवभाषणे रामाभिधानम् :" वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हु वर्तते सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते । यानि त्रीण्यकुतोभयान्यपि पदान्यासन्खरायोधने यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ " अत्र हु वर्तते इत्यत्र हु वर्ततामिति पाठयित्वा यानि त्रीणीति पादे " यानि त्रीणि कुतो मुखान्यपि पराण्यासन्खरायोधने । " इति पादं प्रकल्प्य रावणाङ्गदसंवादेऽङ्गदकृतरामवर्णने अयाजि ।

---

१ इदमेवं पद्यमुत्तररामचरिते जनककृतलववर्णनम् ।

२ किं वर्ण्यतामित्यपि तत्र पाठः ।

तथा च कालिदासकृतशाकुन्तलनाटकप्रथमाङ्के हरिणवर्णनम्–" ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् । दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ " इह च रामस्यास्यन्दनत्वात् " स्यन्दने दत्तदृष्टिः" इति प्रपठ्य रामकृतमारीचवर्णने नियुक्तम् । इत्याद्यन्यपाठास्तथा चान्यदीयवर्णनमपि जिज्ञासुभिस्तत्र तत्र द्रष्टव्यम् । विस्तरभयान्न लिख्यतेऽस्माभिः ।

परं चैवम् । इदं नाटकमलङ्काररसभरितपद्यानां समावेशितत्वादतीव व्युत्पादकम् । तदुपरि टीकाकारेण विद्वच्छिरोग्रमणिमिश्रमोहनदासेनाप्यतीव लोकोत्तरश्लेषादिना अनेकार्थाद्भुतवागर्थादिना रसालङ्कारप्रदर्शनेन च सम्यग्ग्रथितमाख्यातं च अतश्चातीव समुल्लसतीत्यशेषगतिमङ्गलम् ।

---

गंगाविष्णु श्रीकृष्णदास,
" लक्ष्मीवेंकटेश्वर " छापखाना,
कल्याण–मुंबई.

॥ श्रीगणेशाय नमः ॥

अथ

दीपिकाख्यसंस्कृतटीकासमेतं

# हनुमन्नाटकम्

ः।

**कल्याणानां निधानं कलिमलमथनं पावनं पावनानां**
**पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य ।**
**विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां**
**बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥१॥**

---

हृदये यत्प्रेरणया समुद्यतोऽहं विमूढतरबुद्धिः ।
तत्पदकमलं वन्दे गोकुलनाथस्य वेदादेः ॥ १ ॥
हनुमन्नाटकसागरशब्दार्थागाधतां सुबोधत्वम् ।
नेतुं कृतसाहसतां मम सुधियः क्षन्तुमर्हन्तु ॥ २ ॥

तावच्छ्रीरामचन्द्रगुणचक्रवालवर्णनेच्छुः कविः स्वाभीष्टदेवतानामान्तरिताशीःपूर्वां नान्दीमवतारयति—कल्याणानामित्यादिद्वादशपदैः ॥ तदुक्तं नाटकावतारे । "अष्टाभिर्दशभिर्वापि नान्दी द्वादशभिः पदैः। आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ॥" इति । नान्दी मङ्गलवचनमिति । अत्र संक्षेपतोर्थोद्घाटनं क्रियते विस्तरस्य श्रद्धाविच्छेदकत्वात् । रामनाम भवतां भूतये प्रभवतु इत्यन्वयः । भूतये ऐहिकपारलौकिकैश्वर्याय मोक्षाय वा । "भूतिरैश्वर्यमोक्षयोः" इति चरकः । मेलकोपमालङ्कारः । उक्तं च वीरभानौ । "विशेषणार्थनिर्भक्तो यद्यनेकार्थभाक्पदः । वाक्यवादिविहीनोऽपि मेलकः संमतो बुधैः ॥" इति । तत्र विशेषणैस्तद्रूपप्रदत्वं द्योतयति । क-

पातु श्रीस्तनपत्रभङ्गमकरीमुद्राङ्कितोरस्थलो
देवः सर्वजगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदयः ।
क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भू-
र्भाति स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः २॥

ल्याणानि निधीयन्ते यस्मिन् तत् निधानं कलिमलमथनम् एतेन पापहारित्वमुक्तम् । कविवरवचसां वाल्मीक्यादिवाचाम् एकं विश्रामस्थानम् । एतेन तदितरस्यासद्वर्णनत्वमुक्तम् । एतेन पदत्रयेणैहिकैश्वर्यप्रदत्वमुक्तम् । पारलौकिकैश्वर्यप्रदत्वमाह । पावनानां ब्रह्मादीनामपि पावनम् एतेन तत्तल्लोकप्रदत्वमुक्तम् । अतः पारलौकिकैश्वर्यप्रदत्वमायाति । अथ मोक्षप्रदत्वमाह । परपदप्राप्तये परस्मिन् ब्रह्मणि पदं स्थानं तत्प्राप्तये प्रस्थितस्य मुमुक्षोः पाथेयं मार्गे साधु । ननु नाम्नैव मोक्षः कथं धर्मादीनां सत्त्वशोधकत्वेन मोक्षदत्वमिति चेत्तत्राह । धर्मद्रुमस्य बीजं नाम्नि कीर्तिते सर्वे धर्माः कृता भवन्ति । अथोत्पत्तिबीजे पुष्पफलादिकं सर्वमस्तीति । जीवनानाम् इति वा पाठः । जीवनं प्रकृतिस्तस्यापि जीवनं चेतनकर्तृ । उक्तं च । "यतो जीवत्वमायाति जीवः प्रकृतितः स्वतः । " इति । एतैर्विशेषणैर्मोक्षप्रदत्वमुक्तम् ॥ १ ॥

इदानीं वर्णनीयनायकगुणानाह—पात्विति ॥ स देवो विलसनशीलः श्रीरामो वः पातु । कीदृक् श्रियः स्तनयोर्यः पत्रभङ्गः पत्ररचना तत्र या मकरी मुद्रा तयाङ्कितोरस्थलः एतेन शृङ्गारित्वं सूचितम् । सर्वजगत्पतिः एतेन रञ्जितलोकत्वमुक्तम् । पुनः कीदृक् मधुवधूवक्त्राण्येवाब्जानि कमलानि तत्संकोचनाय चन्द्रोदयः । स कः यस्य नवेन्दुविशदे द्वितीयचन्द्राकारे दंष्ट्राङ्कुरे भूर्भाति स्म । क्रीडायै धृता वराहतनुर्येन । किंभूता भूः प्रलयाब्धिरेव पल्वलमल्पसरस्तस्य तलं तत उत्खातो य एको मुस्तस्तम्बस्तदाकारा । एतेन पदद्वयेनातिकल्पत्वमुक्तम् । उक्तं च रसोदधौ । " दाता सद्गुण-

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ३॥
तं रामं रावणारिं दशरथतनयं लक्ष्मणाग्र्यं गुणाढ्यं
पूज्यं प्राज्यं प्रतापावलयितजलधिं सर्वसौभाग्यसिद्धिम् ।
विद्यानन्दैककन्दं कलिमलपटलध्वंसिनं सौम्यदेवं
सर्वात्मानं नमामि त्रिभुवनशरणं प्रत्यहं निष्कलङ्कम् ४

---

शीलः सुवयोरूपान्वितः परप्रेमी । विद्यावानतिकल्पो रञ्जितलोको मतोऽनेन ॥ " इति ॥ २ ॥

अथ विद्यावानिति नेतृगुणं वक्तुं पद्यमवतारयति—यमिति ॥ यं रामं शिवभक्ताः शिवेति नाम्ना समुपासते । "महारुद्रादभूत् प्रकृतिरतः सूत्रं ततोऽहमिति ततो विश्वम् " इति श्रुतेः । वेदान्तिनो ब्रह्मेति । "एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किंचन " इति श्रुतेः। बौद्धा बुद्ध इति । " प्राण्यालम्भनं संसृतिं नन्दयेति माम् " इति श्रुतेः । प्रत्यक्षानुमानोपमानशब्दाभावार्थप्रतिपत्तिप्रमाणानीति प्रमाणेष्वेव निपुणा नैयायिकाः कर्त्तेति । " सनातनाः पशवः प्रविशन्ति प्रमेयानुभूतेः कर्त्तैव ततः " इति श्रुतेः। जैनाज्ञाभिरता अर्हन्निति। " स्वभाव एवेश्वरो नान्योऽस्ति कदाप्यस्यानीदृशत्वापत्तेः " इति श्रुतेः । मीमांसकाः कर्मेति । " कर्मणा जायते नश्यति भयाभयसुखानि " इति श्रुतेः । एतैस्तदुपशिक्षितैः मार्गैरेव यमुपासते सोऽयं रामो वाञ्छितफलं पूरयतु । एतेन विद्यावत्त्वमुक्तम् । हरिरित्यनेन दुःखहारित्वात्परप्रेमगुणो दर्शितः । त्रैलोक्यवासिजनैस्तत्तद्देवताभजनेन तत्तत्फलं प्रतिनाथ्यते याच्यते इत्यनेन दातृत्वमुक्तम् ॥ ३ ॥ ४ ॥

## अथोपक्रमः ।

आसीदुद्भटभूपतिप्रतिभटप्रोन्माथिविक्रान्तिको
भूपः पङ्क्तिरथो विभावसुकुलप्रख्यातकेतुर्बली ।
उर्वीबर्बरभूरिभारहरये भूरिश्रवाः पुत्रतां
यस्याऽऽर स्वमथो विधाय महितः पूर्णश्चतुर्धा विभुः ॥५॥
तेषामीश्वरतागुणैश्च जनुषा ज्यायानभूद्राघवो
रामः सोऽप्यथ कौशिकेन मुनिना रक्षोभयाद्याचितः ।
राजानं स यशोधनो नरपतिः प्रादात्सुतं दुःखित-
स्तस्मै सोऽपि तमन्वगादनुगतः सौमित्रिणोच्चैर्मुदा ॥६॥
सुन्दस्त्रीदमनप्रमोदमुदितादास्थाय विद्योदयं
रामः सत्यवतीसुतादथ गतस्तस्याश्रमं लीलया ।
क्रूते कौशिकनन्दनेन च मखे तत्रागतान् राक्षसान्
हत्वाऽमूमुचदाशु भाविविदसौ मारीचमुग्राकृतिम् ॥७॥

---

इदानीं कथायोजनाय व्याख्याकृदात्मनः श्लोकचतुष्टयमवतारयति—आसीदित्यादि ॥ पङ्क्तिरथो दशरथो भूपः राजा आसीत् । स कः यस्य भूरिश्रवाः नारायणः स्वम् आत्मानमेव रामलक्ष्मणभरतशत्रुघ्नरूपेण चतुर्धा विधाय पुत्रताम् आर प्राप । किमर्थम् उर्व्यां ये बर्बरा राक्षसास्तेषां यो भूरिभारस्तन्नाशाय । "बर्बरो राक्षसोऽधमः" इति धरणिः । किंभूतः पुत्रार्थमिष्टः । अन्यत्सुगमम् ॥५॥

तेषां चतुर्णां पुत्राणां मध्ये जनुषा जन्मना ईश्वरत्वप्रतिपादकगुणैश्च रामः ज्यायानतिशयेन ज्येष्ठोऽभूदिति योज्यम् । अन्यत्सुगमम् ॥ ६ ॥

सुन्दनाम्नो रक्षसः स्त्री ताटका सत्यवतीसुताद्विश्वामित्राद्विद्यो-

पूर्णे यज्ञविधौ यियासुरभवद्रामेण सार्द्धं मुनिः
सीतासंवरणागताखिलनृपव्याभग्नवीर्यश्रियम् ।
श्रुत्वा तद्धनुरुत्सवं च मिथिलामास्थाय तेनाधिकं
सत्कारैरुपलम्भितः पुनरगाच्चापाश्रितं मण्डलम् ॥८॥

तदा सीता–( आत्मगतम् )

धनुर्मधुरमूर्तिरसौ रघुनन्दनः ।
कथमधिज्यमनेन विधीयतामहह तात पणः स्तवदारुणः॥

रामो–( लक्ष्मणं प्रति )

आद्वीपात्परतोऽप्यमी नृपतयः सर्वे समभ्यागताः
कन्यायाः कलधौतकोमलरुचेः कीर्तेश्च लाभः परः ।
नाकृष्टं न च टङ्कितं न नमितं नोत्थापितं स्थानतः
केनापीदमहो महद्धनुरिदं निर्वीरमुर्वीतलम् ॥ १० ॥

---

दयं भाविवित् निमित्तभूतेनानेन मृगरूपेण रावणः सीतां हरिष्यतीति भाविवित् । शेषं सुगमम् ॥ ७ ॥ ८ ॥

तत्र रामं दृष्ट्वा सीता विचिकित्सति–कमठेति ॥ इदं धनुः कमठपृष्ठवत् कठोरम् । रघुनन्दनो रामो मधुरमूर्तिः सुकुमाराङ्गः । अहहेति खेदे । अनेन रामेण इदं धनुः अधिज्यम् अधिकृतगुणं कथं विधीयताम् । अतः तातस्य पितुः पणः कोऽपि धनुराधिज्यं करिष्यति तस्मै सीतां दास्यामीत्येवंरूपा प्रतिज्ञा । स्तवाय स्तुत्यै दारुणः अयोग्यः अस्तुत्य इति । यद्वा । अविसर्गपाठे हे तात तव पणो दारुण इति मानसोक्तिः । तातपणश्चेन्नाभविष्यत्तर्ह्यहं राममन्विष्यामीति भावः । " स्तवः स्तोत्रं स्तुतिर्नुतिः " इत्यमरः ॥ ९ ॥

अथ रामः सीतासंशयमवधार्यात्मशक्तिं ज्ञापयितुं लक्ष्मणमनुवदति–आद्वीपादिति ॥ भो लक्ष्मण अमी नृपतयः आद्वीपात्सम-

लक्ष्मणः—( रामहृदयानन्दकन्दाङ्कुरोद्भवाय निजप्रचण्ड-
दोर्दण्डयोर्महतीं प्रौढिं नाटयति । )

देव श्रीरघुनाथ किं बहुतया दासोऽस्मि ते लक्ष्मणो
मेर्वादीनपि भूधरान्न गणये जीर्णः पिनाकः कियान् ।
तन्मामादिश पश्य पश्य च बलं भृत्यस्य यत्कौतुकं
प्रोद्धर्तुं प्रतिनामितुं प्रचलितुं नेतुं निहन्तुं क्षमः ॥ ११ ॥

---

भ्यागताः । द्विर्गता आपो यस्मिन्निति द्वीपं सागरान्तर्वर्ती देशः । तमतिव्याप्य परतः लङ्कादेरपि । यद्वा । द्वीपो जम्बुद्वीपस्तमभिव्याप्य परतो द्वीपान्तरादपि तत्रापि सर्वे न तु केचन तेषां मध्ये केनापि इदं महद्धनुः महतो रुद्रस्य धनुः यद्वा महच्चेदं धनुश्च नाकृष्टम् । नन्वाकर्षणं तिष्ठतु न टङ्कितं टङ्कारवन्न कृतम् । एतदपि तिष्ठतु न नमितमपि स्थानतोऽपि नोत्थापितम् ! अहो महदाश्चर्यमिदम् उर्वीतलं निर्वीरं वीर एव अत्र कोऽपि नास्ति । यद्वा इदं धनुर्निर्वीरं निर्गताः पराजिताः मानभङ्गात्पलायिता वा वीरा यस्मात्तदिति वाक्यान्तरेणेदंशब्दस्य पुनरुक्तिः । उर्वीतलमिति सप्तम्यर्थे प्रथमान्तपदमार्षम् । नन्वेतदाकर्षणादौ को लाभ इति चेत्तत्राह । कलधौतस्य दाहोत्तीर्णहेम्न इव कोमला रुचिर्यस्या एवंभूतायाः कन्यायाः लाभः । “ कलधौतं तप्त हेम स्यात् ” इति धरणिः । कन्येयं कलधौतकोमलरुचिः कीर्तेश्च लाभोऽपर इति पाठेऽप्ययमेवार्थः । इयं कन्या सीता तल्लाभः इति सीतायाः पित्राद्यधीनतया कन्यात्वम् ॥ १० ॥

देवेति ॥ पूर्वार्द्धं स्पष्टमेव । तत्तस्मात्कारणात् मामादिश आज्ञापय । भृत्यस्य मम यत्कौतुकम् आश्चर्यकर्तृ बलं तत्पश्य । पश्येत्यादरे वीप्सा । किं बलमिति चेत्तत्राह । एतद्धनुः प्रोद्धर्तुं भूमेः प्रतिनामितुं नम्रीकर्तुं प्रचलितुं कोणगुणालोकनाय चलयितुं नेतुम्

रावणपुरोहितः—( जनकं प्रति )

दातव्येयमवश्यमेव दुहिता कस्मै चिदेनामसौ
दोःक्रीडामशकीकृतत्रिभुवनो लङ्कापतिर्याचते ।
तत्किं मूढवदीक्षसे ननु कथागोष्ठीषु नः शासते
तद्वृत्तानि परारेजांसि मुनयः प्राच्या मरीच्यादयः ॥ १२ ॥

( पुना रामं प्रति )

समन्तादुत्तालैः सुरसहचरीचामरमरु-
त्तरङ्गैरुन्मीलद्भुजपरिघसौरभ्यशुचिना ।
स्वयं पौलस्त्येन त्रिभुवनजिता चेतसि धृता-
मरे राम त्वं मा जनकपतिपुत्रीमुपयथाः ॥ १३ ॥

जनकः—माहेश्वरं धनुः कुर्यादधिज्यं चेद्ददामि ताम् ।
पुरोहितः—गुरोः शम्भोर्धनुर्नो चेच्चूर्णतां नयति क्षणात् ॥

---

इतो गमयितुं निहन्तुं भग्नीकर्त्तुं क्षमोऽस्मि किं पुनराकर्षणमात्रमिति भावः । " पिनाकोऽजगवं धनुः " इत्यमरः । ममैवात्रेदृशी शक्तिः भवन्तस्तु ब्रह्माण्डोद्धरणसहा इति द्योतितम् ॥ ११ ॥

तयोरेवं वदतोरेतदन्तरमासाद्य रावणपुरोहितो जनकमनुवदति । भो जनक इयं सर्वोत्तमा दुहिता कस्मैचिदयाचतेऽपि वराय दातव्यैव असौ प्रसिद्धः कुलाचारः । एतेन कौलिन्यमुक्तम् । लङ्कापतिः अनेनैश्वर्यमुक्तम् । दोःक्रीडामशकीकृतत्रिभुवनः एतेन कल्पत्वमुक्तम् । भुजक्रीडानिर्जितत्रिभुवनः यद्वा भुजक्रीडया मशकीकृतं निश्चेतनीकृतं त्रिभुवनं येन । " दंशाचेतनयोर्मशा " इति विश्वः । मश एव मशकः एवंभूतो रावणः एनां स्वयमेव याचते तत्तस्मादज्ञातार्थवदीक्षसे विचारयसि । ननु वितर्के । प्राग्भवाः प्राच्या मरीच्यादयो मुनयः तद्वृत्तानि रावणचरितानि कथागोष्ठीषु नः अ-

जनकः—( विहस्य )

शम्भोरावासम०

माहेश्वरं धनुः क्रष्टुमर्हते दशकन्धरः ॥ १५ ॥

जनकः—( सीतां प्रति सखेदम् )

माहेश्वरो दशग्रीवः क्षुद्राश्चान्ये महीभुजः ।

पिनाकारोपणं शुल्कं हा सीते किं भविष्यति ॥ १६ ॥

---

स्मान् शासते कथयन्ति । किंभूतानि परोरजांसि शुद्धानि यद्वा रजोभ्यो भूरेणुभ्यः पराणि अधिकानि परोरजांसि । परःशब्दनिपातनं मन्यते भोजराजः । इत्यादिविशिष्टगुणोऽयं याचते तस्मादस्मै दातव्येति भावः । ननु कथागोष्ठीषु तस्यासतीति पाठे नु इति वितर्के । गोष्ठीषु पुरावृत्तवर्णनरूपासु तस्य रावणस्य कथा इयमितिरूपा काचित्साऽसती मिथ्या न सत्यैवेत्यर्थः । यद्वा । तस्य लङ्कापतेर्वृत्तं शीलमिव शीलं येषां तानि मध्यमपदलोपिसमासः । रजसः प्रकृतेः परं परोरजः परब्रह्म तद्रूपाणि । यद्वा । तस्य वृत्तानि शीलानि अप्याचरन्तीति शेषः । ननु महीयान् कथं याचते इति चेत्तत्राह । साधारणो निरातङ्कं कन्यामन्योऽपि याचते किं पुनर्जगतां नेता स पौत्रः परमेष्ठिनः ॥ १२ ॥ १३ ॥ १४ ॥

धनुराकर्षणे रावणशक्तिं द्योतयति काक्वा । दशकन्धरः माहेश्वरं धनुः क्रष्टुमाक्रष्टुं योग्योऽस्ति । किंभूतः शम्भोः आवासस्थानम् अचलम् उत्क्षेप्तुम् उद्धर्तुं भुजकौतुकी भुजे कौतुकमस्यास्तीति गुरोर्गृहमुद्धर्तुं किं पुनः तद्धनुरिति भावः ॥ १५ ॥

दशग्रीवो धनुरारोप्य त्वां लङ्कां नेष्यति अथवा कश्चिन्नृपः त्वां दूरदेशं नेष्यतीति खेद इत्यर्थं श्रुत्वा सीता पुनः खिद्यमाना तदेव पद्यं पुनः पठति । कमठपृष्ठकठोरमिति । पुनः पठितं पुरोहितः सक्रोधम् ॥ १६ ॥

( सीता कमठपृष्ठेत्यादि पुनः पठति )

रावणपुरोहितः—( सक्रोधम् )

साद्धं हरेण हरवल्लभया च देव्या
 हेरम्बषण्मुखवृषप्रमथावकीर्णम् ।
कैलासमुद्धृतवतो दशकन्धरस्य
 केयं च ते धनुषि दुर्मद दोःपरीक्षा ॥ १७ ॥

जनकः—शृणुत जनककल्पाः क्षत्रियाः शुल्कमेते
 दशवदनभुजानां कुण्ठिता यत्र शक्तिः ।

---

हे दुर्मद दुर्वीराग्रह धनुषि दशकन्धरस्य दोःपरीक्षा भुजबलज्ञानरूपा का न कापि । ते तव इयं धनुरधिज्यकरणरूपा परीक्षा का न कापीत्यर्थः । किंविशिष्टस्य कैलासं गिरिं धृतवतः अन्यत्तु सुगमम् । यद्वा । किंविशिष्टस्य ते हरेण नैपुण्येन साद्धं कैलासनेतृगुणम् उद्धृतवतः उच्चैर्हृदि धारयतः ईदृङ्नेता नेदृगिति ज्ञानवतः । " हरो नैपुण्यरुद्रयोः " इति चरकः । " गुरौ नेतृगुणे भावे कैलासः स्त्रीहरेऽपि च । " इति शाश्वतः । स पुनः वल्लभया देव्या साद्धं देवी द्योतमाना वल्लभा कार्याकार्यपरीक्षा तया सहेत्यर्थः । " कार्याकार्यविचारेक्षा वल्लभा च जयध्वनिः । " इति विश्वः । किंविशिष्टं नेतृगुणं हेरम्बषण्मुखवृषा याः प्रमथाः विद्यास्ताभिराकीर्णं युक्तम् । हेरम्बो गणेशस्तस्यैवाग्रपूज्यत्वं विघ्ननाशविद्या । षण्मुखस्यैव शत्रुसंहारविद्या । वृषो धर्मस्यैव लोकपालनविद्या एताभिर्युक्तः । एतद्विशेषणत्रयेण सद्गुणशालित्वातिकल्पत्वरञ्जितलोकत्वादयो गुणा दर्शिताः । हरेण हरवल्लभया चेति पदद्वयेन विद्याबलत्वमुक्तम् । किंवत् । हरो रुद्रस्तद्वत् यथा रुद्रः सर्वं जानाति तथाखिलनेतृगुणान् जानतः तव धनुरुद्धरणमात्रे का परीक्षेति भावः ॥ १७ ॥

जनकोऽपि पुरोहितमाक्षिप्य स्वप्रतिज्ञातं राज्ञः श्रावयति । जानकी जन एव जनकः जनानां समूहो जानकं जानकमस्यास्तीति

नमयति धनुरश यस्तदारोपणेन
त्रिभुवनजयलक्ष्मीर्जानकी तस्य दाराः ॥ १८ ॥

( श्रीरामनाट्यम् )

कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यन् श्रृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं रचयति रघूणां परिवृढः ॥ १९ ॥

---

जानकी जनसमृद्धिमान् । अन्यथा सीतावर्णनेन वैरस्यत्वमायाति अतो जानकीपदेन जनक एव एतेनैतस्य निर्भयत्वं सूचितम् । भोः क्षत्रियाः श्रृणुत । किंविशिष्टा जनककल्पा जनको रुद्रः बलेन ततः किंचिन्न्यूना इत्यर्थः । " लोकरुद्रनृपन्याजतातेषु जनकः पुमान् । " इति धरणिः । शुल्कमिति पाठे जनकस्य मम शुल्कं पणं श्रृणुत । तमाह यत्र धनुषि दशवदनभुजानां शक्तिः कुण्ठिता जाता तदैशं धनुः कोऽपि नमयति तदारोपणेनैव मैथिली तस्य तदारोपणकर्तुः दाराः स्यात् । दारशब्दो भूम्न्येव । किंविशिष्टा त्रिभुवनजयलक्ष्मीः यत्प्राप्तौ त्रिभुवनं जितं भवतीति भावः । धनुरारोपणेन तद्वासिजनावनात् ॥ १८ ॥

इत्युक्ते श्रीरामः सर्वतोवलोक्य तदुत्थानं नाटयति । अत्र रामे चित्ररसः प्रतिपाद्यते । धनुःस्थाने तिर्यङ्मुखमुपविष्टायाः जानक्याः कपोले स्मरस्मेरं सकामस्मितं यथा स्यात्तथा वक्त्रकमलं निजमुखारविन्दप्रतिबिम्बं पश्यन् एतेन मधुररसो दर्शितः । किंविशिष्टे कपोले करिकलभः करिशावकस्तस्य दन्तयोर्द्युतिं किंचित् पीतोज्ज्वलतां मुष्णातीति एतेन सीताया अपि चरमकैशोरत्वमुक्तम् । स्वयंवरागतरक्षःसेनाकोलाहलं च श्रृण्वन् वयं बलाद्धरिष्यामः इत्येवंरूपम् एतेन भयानको दर्शितः । जटाजूटसमूहग्रन्थि

गृहीतहरकोदण्डे रामे परिणयोन्मुखे ।
पस्पन्द नयनं वामं जानकीजामदग्न्ययोः ॥ २० ॥

लक्ष्मणः—( रामे सज्यं धनुः कुर्वति सति पृथ्व्यादीनि भुवनान्यधो यास्यन्तीत्याशङ्क्याह )

पृथ्वि स्थिरा भव भुजङ्गम धारयैनां
त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः कुरुत तत्रितये दिधीर्षां
रामः करोति हरकार्मुकमाततज्यम् ॥ २१ ॥

पृथ्वी याति विनम्रतां फणिपतेर्नम्रं फणामण्डलं
बिभ्रत्क्षुभ्यति कूर्मराजसहिता दिक्कुञ्जराः कातराः ।
आतन्वन्ति च बृंहितं दिशि भटैः सार्धं धराधारिणो
वेपन्ते रघुपुङ्गवे पुरजितः सज्यं धनुः कुर्वति ॥ २२ ॥

---

रचयति अनेन वीररसो दर्शितः । "व्रतिनस्तु सटा जटा" इत्यमरः । गण्डोड्डुमरपुलकं गण्डव्यापकम् एतेनोद्भास्वराख्यः स्निग्धसात्विको दर्शितः । रसत्रयेऽपि ऊड्डुमरः प्रचण्डः परिवृढोऽधिपः । उक्तं मदीयरसोदधौ । "शबलत्वं हि रसानां सर्वेषामेव जायते यत्र । दशमः सोऽत्र निरुक्तश्चित्ररसः सर्वरससारः ॥ " ॥ १९ ॥

धनुरुद्धरणाडम्बरे सीताजामदग्न्ययोः शुभाशुभं द्योतयति—गृहीतेति ॥ पस्पन्द अस्फुरत् । तदुक्तं वसन्तराजे । " चक्षुर्वामं मृगदृशो जयकारि भृशं त्वरा । तदेव पुरुषस्याराात् स्फुरितं भयशंसनम् ॥ " इति ॥ २० ॥

इदं द्वितीयं पृथ्वी भुजङ्गमं चेति तत्त्रितये तस्मिन् त्रितये भूभुजङ्गमपूर्वरूपे दिधीर्षां धर्तुमिच्छां कुरुतेति ॥ २१ ॥

अत्र भूतार्थे यातीत्यादि वर्तमाननिर्देशः । कवेस्तात्कालिकानु-

( तदा च )

उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्द्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम्।
वैदेही मनसा समं च सहसा कृष्टं ततो भार्गव-
प्रौढाहंकृतिदुर्मदेन सहितं तद्भग्नमैशं धनुः ॥ २३ ॥
शंभौ यद्गुणवल्लरीमुपनयत्याकृष्य कर्णान्तिकं
भ्रश्यन्ति त्रिपुरावरोधसुदृशां कर्णोत्पलग्रन्थयः।
स्वं चास्फालयति प्रकोष्ठकमिमामुन्मुच्य तासामहो
भिद्यन्ते वलयानि दाशरथिना तद्भग्नमैशं धनुः ॥२४॥

---

भवेन "फटायां तु फणा द्वयोः" इत्यमरः। "बृंहितं करिगार्जि-तम्" इत्यमरः। पुराजितस्त्रिपुरजेतुः रुद्रस्य ॥ २२ ॥

अथ धनुर्भङ्गे नानारसानुभवाच्चित्ररसं दर्शयितुं पद्यमवतारयति—उत्क्षिप्तमिति ॥ कौशिके वत्सलरसो जातः। अत्र हर्षः संचारी हर्षोत्पुलका इति ज्ञानम्। भूपेषु भयानकरसः। अत्र दैन्यं संचारि दैन्यादेव मुखनमनम्। अत्र भीषणा त्रिविधा। तत्र प्रभावेनैव रामे भीषणत्वं जनके करुणारसो जातः। अत्र ग्लानिः संचारिणी सा चाधेर्जाता। आध्यनुभावः संशय इति ज्ञानम्। वैदेह्यां मधुररसो जातः। मनआकर्षणमेवात्रानुभावः। रामे वीररसः। अत्र स्पर्द्धोद्दी-पनं परशुरामो गत इति ज्ञानम्। अत्र सर्वरसानामुद्दीपनविभावो राम एव ॥ २३ ॥

धनुषो महत्त्ववर्णनेन रामे महत्त्वमवतारयति—शम्भाविति ॥ श-म्भौ रुद्रे यद्गुणवल्लरीं प्रत्यञ्चिकामाकृष्य कर्णान्तिकमुपनयति सति तदा त्रिपुरावरोधसुदृशां कर्णोत्पलग्रन्थयः भ्रश्यन्ति। यदा च इमां गुणवल्लरीम् उन्मुच्य परित्यज्य स्वम् आत्मीयं प्रकोष्ठकम्

अपि च

तद्ब्रह्ममातृवधपातकिमन्मथारि-
क्षत्रान्तकारिकरसंगमपापभीत्या ।
ऐशं धनुर्निजपुरश्चरणाय नूनं
देहं मुमोच रघुनन्दनपाणितीर्थे ॥ २५ ॥

त्रुटयद्भीमधनुःकठोरनिनदस्तत्राकरोद्विस्मयं
त्रस्यद्वाजिरवेरमार्गगमनं शंभोः शिरःकम्पनम् ।
दिग्दन्तिस्खलनं कुलाद्रिचलनं सप्तार्णवोन्मेलनं
वैदेहीमदनं मदान्धदमनं त्रैलोक्यसंमोहनम् ॥ २६ ॥

---

आस्फालयति तदा तासामेव त्रिपुरसुदृशां वलयानि कङ्कणानि भिद्यन्ते तदीदृग्धनुर्दाशरथिना भग्नमिति महत्त्वम् ॥ २४ ॥

नन्वत्र तदुत्थापनमेव पणः किमर्थस्तद्रामेण भग्नमिति चेत्तत्राह । तत् ऐशं धनुः रामहस्ततीर्थे देहं मुमोच त्यक्तवान् । किमर्थं निजपुरश्चरणाय पापप्रणाशार्थम् । कथं पापसंभावना । ब्रह्ममातरौ ब्रह्मा च माता च ब्रह्ममातरौ तयोर्वधः तेन पातकिनौ यौ मन्मथारिक्षत्रान्तकारिणौ तयोः करसङ्गमाद्यत्संसर्गपापं तद्भीत्याप्यन्योऽपि पापः तीर्थे देहं त्यक्त्वा शुद्धो भवतीति प्रसिद्धम् ॥ २५ ॥

तत्र तस्मिन्नवसरे त्रुटयद्भज्यमानं भीमो रुद्रः तद्धनुस्तस्य कठोरः परुषो निनादः स विस्मयम् आश्चर्यमकरोत् । तदेव द्योतयति । त्रस्यन्तो वाजिनो यस्यासौ त्रस्यद्वाजी स चासौ रविश्च तस्य शब्दश्रवणमात्रेण त्रस्ताश्वस्य रवेरमार्गगमनम् अकरोदिति सर्वत्रानुबध्यते । सप्तार्णवानाम् उच्चैराकाशे मेलनम् ऐक्यतां ननु भूमौ तथा सति भूलयः स्यात् । एतत्पद्येनाद्भुतरसो दर्शितः । उक्तं च मदीयरसोदधौ । "यामोचितैर्विभावैः पुष्टिं याता रतिर्हि विस्मयजा । स रसोऽद्भुताख्यः स्यात् पूर्णोऽपि स्याद्विभावोऽत्र ॥" ॥ २६ ॥

रुन्धन्नष्टविधेः श्रुतिर्मुखरयन्नष्टौ दिशः क्रोडयन्
मूर्तीरष्ट महेश्वरस्य दलयन्नष्टौ कुलक्ष्माभृतः ।
तान्यक्ष्णा बधिराणि पन्नगकुलान्यष्टौ च संपादय-
न्नुन्मीलत्ययमार्यदोर्बलदलत्कोदण्डकोलाहलः ॥२७॥

लक्ष्मणः—जामदग्न्यः क्षुत्यद्भैरवधनुःकोलाहलामर्ष-
मूर्च्छितः प्रलयमारुतोद्धुतकल्पान्तान-
लवत्प्रदीप्तरोषानलः ।

( रामं प्रति परशुरामं सूचयन् )

यद्भभञ्ज जनकात्मजाकृते राघवः पशुपतेर्महद्धनुः ।
तद्धनुर्गुणरवेण रोषितस्त्वाजगाम जमदग्निजो मुनिः २८

---

तमेवाद्भुतरसं विशिनष्टि—रुन्धन्निति ॥ आर्यो रामस्तस्य भुजबलेन दलद्भज्यमानो यः कोदण्डः धनुस्तस्य कोलाहलः शब्दाडम्बरः अग्रम् उन्मीलति प्रकटीभवति । किं कुर्वन् विधेः ब्रह्मणः अष्टश्रुतिः कर्णान्निरुन्धन् व्यावृण्वन् अष्टौ दिशः मुखरयन् प्रतिध्वनिना वाचालिताः कुर्वन्महेश्वरस्याष्ट मूर्तीः क्रोडयन् व्याकुलयन् । तथा चागमे । " भूर्जलं वह्निराकाशं वायुर्यज्वा शशी रविः । इत्यष्टौ मूर्तयः शम्भोर्मङ्गलं जनयन्तु नः ॥ " इत्यष्टौ । कुलक्ष्माभृतः कुलगिरीन् विस्फोटयन् । तानाह्यागमः । " विजयः कुमुदो नीलो निषधो हिमवानथ । जयन्तः कालनिषधो वाहीकोष्टौ दिगद्रयः ॥ " एते पूजनविधाने । पन्नगकुलान्यपि तत्रैव । " नागसर्पोरगाखुभुग्दन्दशूकाद्विजिह्वगौ । मायिकामृतपालेयशेषाख्याश्चाष्टजातयः ॥ " सर्पेति प्रौढितः । सर्वेषु पङ्कजं यथा स्थलजेष्वपि कमलमिति । " भिन्दन् भूतलम् " इति पद्यमत्र केचित् पठन्ति तत्प्रक्षिप्तमस्ति । रुन्धन्नित्यनेनैकार्थत्वात् ॥ २७ ॥ २८ ॥

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्निग्धपवित्रलाञ्छितमुरो धत्ते त्वचं रौरवीम् ।
मौञ्ज्या मेखलया नियन्त्रितमधः
पाणौ कार्मुकसाक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥२९॥
पित्र्यमंसमुपवीतलक्षणं मातृकं च धनुरूर्जितं दधत् ।
यः ससोम इव घर्मदीधितिः सद्विजिह्व इव चन्दनद्रुमः॥
आजन्म ब्रह्मचारी पृथुलभुजशिलास्तम्भविभ्राजमान-
ज्याघातश्रेणिसंज्ञान्तरितवसुमतीचक्रजैत्रप्रशस्तिः ।

---

मुनिराजगामेति पूर्वेण सम्बन्धः । पृष्ठतस्तूणीद्वयं निषङ्गयुग्मं धत्ते एतेन सर्वं द्वितीयान्तं योज्यम् । रुरुश्चित्तलो मृगः मञ्जिष्ठया रक्तं माञ्जिष्ठकं वासः। उक्तं च। "ब्रह्मव्रतधरो वासो वसानो रक्त-मुत्तमम् ।" इति पाराशरः । किंविशिष्टो मुनिः दण्डः अर्शआदि-भ्योऽच् प्रशस्तो दण्डोऽस्यास्तीति दण्डः ब्रह्मव्रतेति क्षत्त्रदमनेऽपि। पुनः किंविशिष्टः न कश्चित्परः श्रेष्ठो यस्मात्सः अपरः । पुनः पै-प्पलः पिप्पलो ब्रह्मसूत्रमस्यास्तीति पैप्पलः स्वार्थे तद्धितः अर्श-आदिभ्योऽच् । यज्ञोपवीतवान् इति । "अश्वत्थे ब्रह्मसूत्रे च पि-प्पलोऽस्त्री गुणेष्वपि ।" इति धरणिः । दण्डं परं पैप्पलमिति पाठे अश्वत्थस्य दण्डं धत्ते । "बिभृयात्पैप्पलं दण्डं ब्रह्मव्रतधरः सदा ।" इत्युक्तत्वात् । अपरः पैप्पलं दण्डं धत्ते इति वा अर्थः । समुच्चयोऽयमलंकारः । "पदार्थानामनेकेषां यत्रैकस्मिन्निबन्धनम् । एकया क्रियया विज्ञैः स प्रोक्तोऽतिसमुच्चयः ॥" वैरिणोरपि वीर-शान्तरसयोरत्र युक्त्या योजनम् अदोषाय।"युक्त्या कृतोऽपि संयो-गस्तयोर्बाढं न दुष्यति ।" इत्युक्तत्वात् ॥ २९ ॥ ३० ॥

आजन्मेति ॥ एवंभूतो जामदग्न्यः संप्राप्त इत्यन्वयः । पृथुलौ मांसलौ भुजावेव शिलास्तम्भौ तयोर्विभ्राजमाना या ज्याघातश्रेणी

वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्ष्णुवानः पृषत्कान्
प्राप्तो राजन्यगोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः ३१
सोऽयं सप्तसमुद्रमुद्रितमही यस्यार्जुनस्योद्धतं
छित्त्वा भैरवसङ्गरेऽतिजरठं कण्ठं कुठारेण यः ।
रेवातीरनिरोधहेतुगहनं बाहोः सहस्रं जवात्
काण्डं काण्डमखण्डयत्पितृवधामर्षेण वर्षीयसा ॥३२

---

प्रत्यश्विकास्फोटनपङ्क्तिः तस्याः संज्ञया सूचनेनान्तारिता स्वस्मिन्विज्ञापिता पृथ्वीचक्रस्य विजयस्य प्रशस्तिर्येन सः । " नामसूचनयोः संज्ञा " इति विश्वः । वक्षःपीठे पृषत्कान् बाणान् संक्ष्णुवानः तीक्ष्णीकुर्वाणः घनानि यानि अस्त्राणि तेषां व्रणैः यः किणः मांसासृग्विवर्त्तः तेन कठिने । " मांसासृग्भरणं किणः" इति धरणिः । क्षत्त्रिया एव वनगजास्तद्धननार्थं या मृगया तस्यां कौतुकमस्यास्तीति ॥ ३१ ॥

एवंभूतमेनं दृष्ट्वा लक्ष्मणः रामं स्मारयति । हे राम अयं सोऽस्ति । स कः यः भैरवसङ्गरे अतिभयंकररणे उद्धतम् अनम्रं यथा स्यात्तथा । कुठारेण परशुना अर्जुनस्य राज्ञः कण्ठं छित्त्वा पूर्वमूलादुत्कृत्य पश्चात् जवात् वेगेन बाहुसहस्रं काण्डं काण्डम् अखण्डयत् । नन्वर्जुनोल्पबल इति चेत्तत्राह । सप्तभिः समुद्रैः मुद्रिता वेष्टिता वसुमती मही तस्याः पालकस्य । किं विशिष्टं कण्ठम् अतिजरठम् अतिकठोरम् । " समौ जरठकर्कशौ " इति विश्वः । कीदृक् बाहुसहस्रं रेवा नर्मदा तत्तीरनिरोधाय हेतुभूतं गहनं स्त्रीभिः क्रीडन् येन भुजसहस्रेण सरित्प्रवाहमेवारुणत् तद्भुजसहस्रं केन हेतुना अखण्डयत् वर्षीयसा वृद्धिंगतेन पितृवधजन्यक्रोधेनेत्यर्थः ॥ ३२ ॥

येन त्रिःसप्तकृत्वो नृपबहुलवसामांसमस्तिष्कपङ्क-
प्राग्भारेऽकारि भूरिच्युतरुधिरसरिद्वारिपूरेऽभिषेकः ।
यस्य स्त्रीबालवृद्धावधिनिधनविधौ निर्दयो विश्रुतोऽसौ
राजन्योच्चांसकूटक्रथनपटुरटद्घोरधारः कुठारः ॥३३॥

जामदग्न्यः—( क्रोधं नाटयित्वा ) केनेदं कुपितकाल-
दन्तपत्रान्तरालमिच्छता धनुर्भग्नम् ?

रामः—( साशङ्कम् )

पार्वत्या निजभर्तुरायुधमिति म्लानं यदभ्यर्चितं
निर्मोकेन च वासुकेन वलितं यत्सादरं नन्दिना ।

रामं स्मारयित्वा पुनस्तत्परशुं स्मारयति—येनेति ॥ यस्य परशुरामस्यासौ कुठारो विश्रुतः सर्वतो विख्यातः सोऽयमिति पूर्वेणैव संबन्धः । असौ कः येन कुठारेण स्त्रीबालवृद्धावधि स्त्रियश्च बालाश्च वृद्धाश्च तत्पर्यन्तं यद्धननविधानं तस्मिन् प्रवृत्ते सति भूरिच्युतरुधिरसरिद्वारिपूरे अभिषेकः सर्वं हननव्रतपूर्तिस्नानम् अकारि कृतम् । यूनां का वार्त्तेति भावः । किं विशिष्टे वारिपूरे नृपाणां या बह्वी वसा मांसं च मास्तिष्कं[1] तेषां प्राग्भारः संमर्दो यस्मिन् "शीर्षण्यमांसं मास्तिष्कम्" इति विश्वः । " प्राग्भारव्रजसंमर्दा" इत्यपि । किंविशिष्टः कुठारः राजन्यानाम् उन्नतांसा एव कूटाः गिरयः तेषां क्रथने दारणे पट्वी रटन्ती घोरा धारा यस्य सः । " क्रथनोज्जासनानि च " इत्यमरः ॥ ३३ ॥

भो मुने मन्मथोन्माथिनः रुद्रस्य तद्धनुः मय्येव मामुपाश्लिष्य मामासाद्य द्विधा कृतं मध्यतो भग्नं दृश्यते । औपश्लेषिकोऽयमाधारः । भुवि एवं सति भूमौ एवं धनुर्भग्नं कृत्वा सति वर्तमाने

१ ' मेंदू ' इति भाषायाम् ।



भव्यं यत्त्रिपुरेन्धनं धनुरिदं तन्मन्मथोन्माथिनः
सत्येवं मयि रामनामनि भुवि द्वेधाकृतं दृश्यते ॥ ३४ ॥

जामदग्न्यः—स्फीतफूत्कारप्रफुल्लनासापुटकोटरोद्गीर्णप्रभूतगर्वानलोच्छलितकालकूटधूमस्तोमाच्छादितदिङ्मण्डलः । अरे रे निजकुलकमलिनीप्रालेयवर्ष दाशरथे! कथमकाण्डमदान्तप्रचण्डदोर्दण्डकोदण्डखण्डचण्डिमाडम्बरेणापूरितं जगत्त्रयम् । सकलवसुमतीमण्डलाखण्डलकुमुदिनीपक्षलक्ष्मीहरणकिरणमालिनं न मां वेत्सि ? येनोक्तः कार्त्तवीर्यः ।

सहस्रबाहुस्त्वमहं
स्त्वं सैन्ययुक्तोऽस्म्यहमेक एव ।
त्वं चक्रवर्ती मुनिनन्दनोऽहं
तथापि नो पश्यतु तर्कमर्कः ॥ ३५ ॥

---

अन्यत्सुगमम् । “समौ निर्मोककञ्चुकौ” म्लानं शत्रूणां हर्षक्षयकारि त्रिपुरम् इन्धनं दाह्यं यस्य तत् ॥ ३४ ॥

“व्रातः स्तोमः समूहोऽस्त्री” अन्यत्सुगमम् । स्फीतेन फूत्कारेण प्रफुल्लाभ्यां नासापुटाभ्यां नासाविवराभ्याम् उद्गीर्णो बहिर्भूतः प्रभूतो महान् गर्वो अहंकारो यस्य तादृशरोषानल एव कालकूटं विषं तस्य धूमस्तोमेनाच्छादितमावृतं दिशां मण्डलं समूहो येनेति टीकान्तरात् । अरे रे इत्याक्षेपे । अकाण्डमनवसरं प्रचण्डौ यौ दोर्दण्डौ तयोः कोदण्डखण्डनरूपो यश्चण्डिमा चण्डत्वं तदाडम्बरेण जगत्त्रयं कथमापूरितम् । “काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु ।” इत्यमरः । जातं मां त्वं न वेत्सि । किंभूतं सकलवसुमती

उत्कृत्योत्कृत्य गर्भानपि शकलयितुं क्षत्रसंतानरोषा-
दुद्दामस्यैकविंशत्यवधि विशसतः सर्वतो राजवंश्यान्।
पित्र्यं तद्रक्तपूर्णप्रतिवचनमहो मन्द मन्दायमान-
क्रोधाग्नेः सर्वतो मे स खलु न विदितः सर्वभूतैः स्वभावः॥

अपि च

आश्चर्यं कार्तवीर्यार्जुनभुजविपिनच्छेदलीलाविदग्धः
केयूरग्रन्थिरत्नोत्करकषणरणत्कारघोरः कुठारः।

---

पृथ्वी तस्याः मण्डलस्य ये आखण्डला इन्द्राः राजानस्त एव कुमुदिन्यस्तासां पक्षस्य या लक्ष्मीः राज्यादिरूपा तद्धरणे सूर्यं तं कं येन कार्तवीर्यो नृप इत्युक्तः। तदेवाह तर्कं न्याय्यं शेषं सुगमम् ॥ ३५ ॥

हे मन्द कार्याकार्यमूढ मे स्वभावः सर्वभूतैर्न विदितः न ज्ञातः अपि तु विदित एव। अहो यद्भवता न ज्ञातस्तदाश्चर्यमित्यहोपदेन ध्वनितम्। स्वभावमेव द्योतयति। किंविशिष्टस्य मे क्षत्रसंताने यो रोषस्तस्मात् गर्भानपि उत्कृत्य उदरान्निःसार्य शकलयितुं खण्डयितुम् उद्दामस्य गतदयस्य। पुनः सर्वतः सर्वान् स्त्रीवृद्धतरुणरूपपुरुषान् राज्ञां वंशेषु जातान् क्षत्रियान् एकविंशत्यवधि एकविंशतिवारं विशसतः घातयतः। पुनः पित्र्यं पितॄणामिदं पित्र्यं तर्पणादि प्रयोगे द्वितीया। मन्दायमानः क्रोधाग्निर्यस्य यथा पित्र्यमकरवं तथा तथा शान्तक्रोधोऽभवमिति भावः। किंविशिष्टं सर्वतः इति सर्वं यथा स्यात्तथा तद्रक्तपूर्णप्रतिवचनं तेषां क्षत्रियाणां रक्तेन पूर्णं निष्पादितं प्रतिवचनं प्रतिकरणीयं यस्मिन् तत् यत्तिलकुशयवादिसूचकं वचनं तद्रक्तेनैव संपादितमिति भावः। एवंभूतोऽपि भवता न ज्ञातस्तदाश्चर्यम् ॥ ३६ ॥

पुनराश्चर्यमनुवदति। हे राम मदीयः कुठारः ते तव स्मृतिं स्मरणविषयं न प्राप्तः किंतु प्राप्त एव मामनादृत्यैतत्कृतमिति भावः।

तेजोभिः क्षत्त्रगोत्रप्रलयसमुदितद्वादशार्कानुकारः
किन्न प्राप्तः स्मृतिं ते स्मरदहनधनुर्भङ्गपर्युत्सुकस्य ३७

रामः–( सानुनयम् )

बाह्वोर्बलं न विदितं न च कार्मुकस्य
त्रैयम्बकस्य महिमा न तवापि सैषः।
तच्चापलं परशुराम मम क्षमस्व
डिम्भस्य दुर्विलसितानि मुदे गुरूणाम् ॥ ३८ ॥

अपि च

अयं कण्ठः कुठारस्ते कुरु राम यथोचितम्।
निहन्तुं हन्त गोविप्रान्न शूरा रघुवंशजाः ॥ ३९ ॥

( सवैदग्ध्यम् )

भो ब्रह्मन्भवता समं न घटते संग्रामवार्त्तापि नः
सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्द्धनि।

---

ममानादरणमेवाश्चर्यम्। किंविशिष्टः कुठारः कृतवीर्यस्यापत्यं कार्तवीर्यः स चासौ अर्जुनश्च तस्य भुजा एव विपिनं तस्य कर्त्तनलीलायां विदग्धः। पुनः तेजोभिरुग्रः दुष्प्रेक्ष्यः अन्यत्सुगमम्। "कर्षणं घर्षणं समम्" इति धराणिः। "बहुत्वमुत्करो व्रातः" इत्यपि ॥ ३७ ॥

बाह्वोरिति ॥ त्र्यम्बको रुद्रस्तस्येदं धनुस्त्रैयम्बकम्। तनिमेति वा पाठः। तत्र तनोर्भावः तनिमा निःसारत्वमिति। "डिम्भो माणवकः शिशुः" इति विश्वः। एतेन धनुर्भङ्गस्येषत्करत्वं कथितम् ॥ ३८ ॥

इदानीं गर्भिताक्षेपमाविष्करोति–अयमिति ॥ सुगमम् ॥ ३९ ॥

पुनरपि सवैदग्ध्यमाक्षिपति–भो ब्रह्मन्निति ॥ ४० ॥

यस्मादेकगुणं शरासनमिदं सुव्यक्तमुर्वीभुजा-
मस्माकं भवतां यतो नवगुणं यज्ञोपवीतं बलम् ४०

जातः सोऽहं दिनकरकुले क्षत्त्रियः श्रोत्रियेभ्यो
विश्वामित्रादपि भगवतो दृष्टदिव्यास्त्रपारः ।
अस्मिन्वंशे कथयतु जनो दुर्यशो वा यशो वा
विप्रे शस्त्रग्रहणगुरुणः साहसिक्याद्बिभेमि ॥ ४१ ॥

परशुरामः—(साभ्यसूयम्)

येन स्वां विनिहत्य मातरमपि क्षत्त्रास्त्रमध्वासव-
स्वादाभिज्ञपरश्वधेन विदधे निःक्षत्त्रिया मेदिनी ।
यद्बाणव्रणवर्त्मना शिखरिणः क्रौञ्चस्य हंसच्छला-
दद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः ४२

रामः—स्त्रीषु प्रवीरजननी जननी तवैव
देवी स्वयं भगवती गिरिजापि यस्यै ।
त्वद्दोर्वशीकृतविशाखमुखावलोक-
क्रीडाविदीर्णहृदया स्पृहयांबभूव ॥ ४३ ॥

---

दृष्टं ज्ञातं दिव्यास्त्राणां पारमन्तो येन स विप्रे विषये शस्त्रग्रहणं गुरुभारो यस्मिन् तादृशात्साहसिक्यात् । श्रोत्रियेभ्यः-वेदाध्ययनाग्निहोत्रादिकर्मणा श्रेष्ठेभ्यः सुगमम् ॥ ४१ ॥ ४२ ॥

किंचित् क्षुब्धं ज्ञात्वा पुनः स्तौति—स्त्रीष्विति ॥ प्रवीरजननी प्रकृष्टशूरमाता । एवपदेन नान्या । कुत एवम् इत्यपेक्षायामाह । यस्यै तव जनन्यै गिरिजा स्पृहयांबभूवेति । अहं चेदृक्पुत्रमाता स्यामिति । स्पृहायां हेतुमाह । त्वद्दोर्वशीति । विशाखः शिखिवाहनः

अपि च

हारः कण्ठे विशतु यदि वा तीक्ष्णधारः कुठारः
स्त्रीणां नेत्राण्यधिवसतु सुखं कज्जलं वा जलं वा ।
संपश्यामो ध्रुवमपि सुखं प्रेतभर्तुर्मुखं वा
यद्वा तद्वा भवतु न वयं ब्राह्मणेषु प्रवीराः ॥ ४४ ॥

परशुरामः—तथापि ( साभ्यसूयम् )

यच्चापमीशभुजपीडनपीतसार-
प्रागप्यभज्यत भवांस्तु निमित्तमात्रम् ।
राजन्यकप्रधनसाधनमस्मदीय-
माकर्ष कार्मुकमिदं गरुडध्वजस्य ॥ ४५ ॥

रामः—( धर्षणामर्षमूर्च्छितः )

पुरोजन्मा नाद्यप्रभृति मम रामः स्वयमहं
न पुत्रः पौत्रो वा रघुकुलभुवां च क्षितिभुजाम् ।
अवीरं वीरं वा कलयतु जनो मामयमयं
मया बद्धो दुष्टद्विजदमनदीक्षापरिकरः ॥ ४६ ॥

---

स्कन्दो यदा क्रौञ्चगिरिजयार्थं गतस्तदा परशुना युद्धे पराजित इति ॥ ४३ ॥ ४४ ॥

पूर्वं गरुडध्वजस्य इदानीमस्मदीयम् इदं कार्मुकम् आकर्ष । " रणो ना प्रधनं युद्धम् " इति धनंजयः ॥ ४५ ॥

आकृष्टे धनुषि मुनिधर्षणम् अनाकृष्टेमम पराजय इति धर्षणामर्षौ ताभ्यां मूर्च्छितः। पुर इति ॥ अद्यप्रभृति रामः परशुरामः मम पुरोजन्मा ब्राह्मणो न पराजयहेतुत्वात् । स्वयमप्यहं रघुकुलजातानां राज्ञां पुत्रः पौत्रो वा न ब्राह्मणावमाननहेतुत्वात् । तेषां तद-

भूमात्रं कियदेतदर्णवमितं तन्निर्जितं हार्यते
यद्वीरेण भवादृशेन ददता त्रिःसप्तकृत्वो जयम् ।
डिम्भोयं नवबाहुरीदृशमिदं घोरं च वीरव्रतं
तत्क्रोधाद्विरम प्रसीद भगवन् जात्यैव पूज्योऽसि नः॥४७

---

भावात् अतोऽयं भूलोकस्थो जनः अयं कौतुकार्थम् आगतोऽपि देवादिगणः मां वीरं कलयतु जानातु अवीरं वा । " न शौर्यं ब्राह्मणे हि मे " इत्युक्तत्वात् । मया दुष्टस्यास्य द्विजदमनदीक्षायां परिकरः कटिस्थवस्त्रग्रन्थिबद्धोऽस्ति । " स्यात्सज्जत्वं परिकरः " इति विश्वः ॥ ४६ ॥

एतन्मनसि विचार्य तत्तुल्यः पुनरपि शान्त्यैव वदति—भूमात्रमिति ॥ प्रकरणार्थः सुबोध एव । कटाक्षमुपक्षिपति । यदा तत्र विजये लाभत्रयमस्ति तदैश्वर्यग्रहणम् आत्मजयघोषणं शत्रुहननं चेति । तेषां तु तत्पराजये किमपि नास्तीत्याह । यत् भूमात्रं न त्वन्ये लोकास्तत्राप्यर्णवमितं नतु सर्वा भूः । तत्रापि भवादृशेन वीरेण त्वादृशेन शूरेण । तत्रापि त्रिःसप्तकृत्वः न त्वेकवारं निर्जितं तत् हार्यते त्वया त्याज्यते आदाय गृह्यत इति । एतत् कियत् न कियदिति । तदपि भूमात्रं तव नास्तीति भावः । किंविशिष्टेन वीरेण जित्वा ब्राह्मणेभ्यो ददता। एतेनैश्वर्यग्रहणमपि नास्ति तर्हि जयो भविष्यति सोऽपि नास्तीत्याह । अयं श्लक्ष्णो जनः नवबाहुस्तरुण इति । त्वं तु डिम्भो वृद्धः । " डिम्भोऽस्त्री बालवृद्धयोः" इति विश्वः । वीरव्रतम् ईदृशं घोरं " बालवृद्धौ परित्यक्त्वा सास्त्रं हन्यान्न चक्रकम् ।" इति राजनीतौ । कीदृशं वीरव्रतम् अजयं वृद्धजयेऽप्यजयमेवेत्यतो जयोऽपि नास्ति । " यथा कथंचिदत्युग्रं रिपुं हन्याद्विचक्षणः । " इति वाक्याद्वृद्धोऽपि हन्तव्यश्चेत्तत्राह । त्वं नोऽस्माकं जात्यैव ब्राह्मणजात्यैव पूज्योऽसि न क्षात्रेण अतः पूज्ये

द्विः शरं नाभिसंधत्ते द्विः स्थापयति नाश्रितान् ।
द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते॥४८॥

( रामनाट्यवर्णनम् )

रामस्तदादाय धनुः सहेलं
बाणं गुणे योज्य यदा चकर्ष ।
भाति स्म साक्षान्मकरध्वजः स्व-
र्गीतिं प्रचिच्छेद च भार्गवस्य ॥ ४९ ॥

( तदा सीतानाट्यम् )

तच्चापमाकर्षति ताटकारा-
वाकर्णमाकर्णविशालनेत्रा ।
सासूयमैक्षिष्ट विदेहजासौ
कन्यां किमन्यां परिणेष्यतीति ॥ ५० ॥

---

वधाभावः । तस्मात्त्वं क्रोधाद्विरम प्रसीद च । आत्मवधेनास्मभ्य-मयशो मा देहीत्यभिप्रायः । संकरोऽयमलंकारः ॥ ४७ ॥

इत्युक्तेप्युत्कटमात्मक्षात्त्रपणसाफल्यं श्रावयति—द्विः शरमिति॥ सुगमम् ॥ ४८ ॥

मकरध्वजः कामरूपः स्वर्गगमनम् । अत्रेयं कथा । रामस्य बाणो निरर्थको न स्यात् चेन्मुनये त्यजति तर्हि ब्राह्मणवधः स्यात् भूमौ चेत्तर्हि भूतपीडा स्यात् एतत् ज्ञात्वा परशुरामस्य स्वर्गगमनमेव चि-च्छेदेति भावः ॥ ४९ ॥

तदाकर्षणे सीतावृत्तमाह—तच्चापमिति ॥ तच्चापं तस्य मुनेश्चा-पम् । ताटकाराविति पदेन रामस्य स्त्रीषु निर्दयत्वमारोपितं सीतया अन्यस्त्रीपरिणयनेन ताटकावन्ममापि मरणं स्यादिति भावः ॥५०॥

भार्गवः—( सानुनयम् )

य: कार्तवीर्यस्य भुजासहस्रं
चिच्छेद वीरो युधि जामदग्न्यः ।
स सायके रामकराधिरूढे
ब्राह्मण्यदैन्यप्रणयी बभूव ॥ ५१ ॥

धावद्धूर्जटिधर्मपुत्रपरशुक्षुण्णाखिलक्षत्रिय-
श्रेणीशोणितपिच्छिला वसुमती कोऽस्यामधास्यत्पदम् ।
त्रैलोक्याभयदानदक्षिणभुजावष्टम्भदिव्योदयो
देवोऽयं दिनकृत्कुलैकतिलको न प्राभविष्यद्यदि ॥५२॥

रामः—( पश्चाज्जामदग्न्यचरणकमलयोर्निपत्य )

उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरु-

---

भार्गवः सानुनयम् । पूर्वार्द्धे मुनिशौर्यकीर्त्तनेन रामशौर्याधिक्यं द्योतितम् । अनौद्धत्यं तु ब्राह्मणस्वभाव एवेति द्योतितम् । ब्राह्मण्यं ब्राह्मणस्वभावश्चेदं दैन्यं तव प्रणयोऽस्यास्तीति ॥ ५१ ॥

इदानीं मुनिः श्रीरामं स्तौति—धावद्धूर्जटीति ॥ यद्ययं देवो रामः न प्राभविष्यत् नावतरिष्यत् तर्हि अस्यां भूमौ पदं कः अधास्यत्। कुतो नाधास्यदित्यपेक्षायामाह । धावन्क्षत्त्रवधार्थं त्वरमाणः यो धूर्जटेः रुद्रस्य धर्मपुत्रः शिष्यः तस्य यः परशुस्तेन क्षुण्णा या अखिलक्षत्त्रियश्रेणी पङ्क्तिः तस्याः शोणितेन पिच्छला आच्छादिता वसुमती जातेति शेषः । रुद्रशिष्यत्वेन संहारकर्त्वं सूचितम् । " प्रवीणदक्षिणौ विज्ञः " इति विश्वः । " उत्तम्भने रवौ विष्टव-ष्टम्भः स्त्रियामथ । " इत्यपि । अत्र सूर्य उत्तम्भनं वा अन्यत्सुगमम् ॥ ५२ ॥

उत्पत्तिरिति ॥ सत्यं यथार्थभाषणं ब्रह्म वेदः तपः कायक्लेशः एतानि निधीयन्ते यस्मिन् तत्संबुद्धौ हे सत्यब्रह्मतपोनिधे भग-

वीर्यं यत्तु नयद्विरामनुपथं व्यक्तं हि तत्कर्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमही निर्व्याजदानावधिः
सत्यब्रह्मतपोनिधे भगवतः किं किं न लोकोत्तरम् ॥५३॥

परशुरामः—( सदयम् )

माता का न शिशोर्वचांसि कुरुते दासीजनोक्तानि या
कस्तातः प्रमदाप्रतारितमतिर्जानाति कृत्यं न यः ।
कश्चायं भरतश्रियामविधिना यो राजते दुर्नयो
व्याषेधार्थमधिज्यधन्वनि मयि श्रीरामभृत्ये स्थिते ५४॥

ज्ञात्वावतारं रघुनन्दनस्य
स्वकीयमालिङ्ग्य ततोवगाढम् ।
विन्यस्य तस्मिञ्जमदग्निसूनु-
स्तेजो महत्क्षात्त्रवधान्निवृत्तः ॥ ५५ ॥

---

वतः पूज्यस्य तव लोकोत्तरं लोकेभ्योऽतिरिक्तं किं किं न अपि तु सर्वमेवास्ति । तदेव द्योतयति जन्मगुरुवीर्यत्यागैस्त्वादृशः कोऽपि नास्तीति ध्वनितम् । अन्यत्सुगमम् ॥ ५३ ॥

परशुरामः सदयम् । प्रमदया स्त्रिया प्रतारिता प्रलोभिता वञ्चिता मतिर्यस्य भरतानां भरतवंश्यानां राज्ञां श्रियम् । भारतश्रियमिति वक्तव्ये वृद्ध्यभाव आर्षः । भरतस्य दौष्यन्तेः श्रियं वा अविधिना धर्मयुद्धविद्याभावेन यो दुर्नयोऽन्यायो राजते तस्य व्याषेधार्थं श्रीरामस्य तव भृत्ये मयि परशुरामे स्थिते सति स न कोऽपीत्यर्थः । कीदृशे अधिज्यं धनुर्यस्य तस्मिन्निति । अयं क्षेपकः श्लोकः टीकान्तरात् ॥ ५४ ॥

महत्तेज ऐश्वर्यं क्षात्त्रं वा । अन्यत् सुगमम् ॥ ५५ ॥

(रामविवाहवर्णनम्)

निःसाणमर्दलरसालगभीरभेरी-
झंकारतालरवकाहलनादजालैः ।
पूर्णं बभूव धरणी गगनान्तरालं
पाणिग्रहे रघुपतेर्जनकात्मजायाः ॥ ५६ ॥

रामे श्यामे सकामे स्पृशति जनकजापाणिपद्मं प्रदत्तं
पित्रा नेत्रालिपद्मं प्रवरपुरवधूमण्डलानां मुहूर्त्ते ।
तत्पाणिस्पर्शसौख्यं परमनुभवती सच्चिदानन्दरूपं
तत्रासीद्बाणभिन्ना रमणरतिपतेर्योगनिद्रां गतेव ॥ ५७ ॥

वैवाहिकं कुशिकनन्दनजामदग्न्य-
वाल्मीकिगौतमवसिष्ठपुरोहिताद्यैः ।
रामो विधिं सह समाप्य सलक्ष्मणस्तै-
रानन्दयन् जनकजां स्वपुरं जगाम ॥ ५८ ॥

इति हनुमन्नाटके प्रथमोऽङ्कः ॥ १ ॥

---

निःसाणेति ॥ " रसालगोमुखावस्त्री काहलः संकरध्वनौ । " इति विश्वः । निःसाणो वाहिनीवाद्यविशेषः ॥ ५६ ॥

रामे इति ॥ प्रवराः देवाः प्रकृष्टो वरो तेभ्यः ते तत्पूर्वं स्वर्गस्त्रीसमूहानामिति नेत्रश्रेणीपद्मानि यस्मिन् तादृशे मुहूर्त्ते रमयतीति रमणः स चासौ रतिपतिश्च तद्बाणभिन्ना सती योगनिद्रां गता इव आसीत् । एतेन दिग्धप्रलयसात्विको दर्शितः । उक्तं च रसोदधौ । "सुखदुःखाभ्यां चेष्टाज्ञानविलपनं यदा तदा प्रलयः।" इति । किं विशिष्टं तत्पाणिस्पर्शसौख्यं सच्चिदानन्दरूपं मोक्षसुखान्तरगतमिति ५७

वैवाहिकमिति ॥ सलक्ष्मणो रामः एतैः कुशिकनन्दनादिभिः कृत्वा वैवाहिकं विधिं समाप्य तैः कुशिकनन्दनादिभिः सह स्व-

# अथ द्वितीयोऽङ्कः ।

प्राप्यायोध्यां स्वजनपरमोत्साहसंभावनाभि-
र्नत्वा मूर्ध्नाऽखिलगुरुजनं सीतया लक्ष्मणेन ।
रामो यामत्रयमपि कथं मारनाराचभिन्नो
नीत्वा सीता किमिति तुरगांस्ताडयामास दण्डैः ॥ १ ॥

सर्वलक्षणोपेतान् देवभूपालयोग्यान् मेदुरमन्दुरे तुरगानवलोक्य मारज्वराकुलितचित्तभ्रान्त्या वधूपुत्रयोर्मङ्गलावलोकनायागतस्य भगवतस्तरणेः किरणमालिनस्तुरगा इमे स्वभावतेजस्विनस्ताडनमसोढारस्ताडिताः पुनः पुनर्भगवन्तं भास्करं द्रुतगत्याऽस्ताचलं नयन्त्विति बुद्ध्या दाशरथिर्जनकपुत्री च दण्डाघातैस्तुरगांस्ताडयामास।

---

पुरीं जगामेत्यन्वयः । सलक्ष्मण इति पदेन सीतानुजयोर्मिलया लक्ष्मणस्यापि विवाहो द्योतित इति ध्वनितम् ॥ ५८ ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकायां जानकीस्वयंवरो नाम प्रथमोऽङ्कः ॥ १ ॥

---

अथ तयोस्तत्र संभोगमधुरं द्योतयितुं पद्यमवतारयति—प्राप्येति ॥ प्रथमयामस्तु प्रवेशकौतुकेन नीतस्तदग्रे यामत्रयं कथमपि नीत्वा कथमप्यत्र हेतुमाह। मारनाराचाभिन्न इति। अन्यत्सुगमम् । किमित्येतस्यार्थं कविरेव द्योतयति तत्र नास्मद्दोषः ॥ १ ॥

सर्वेति ॥ " मेदुरं स्निग्धचित्रयोः " इति धरणिः । बलात् सीता मेदुरे चित्रे तुरगांस्ताडयामास । रामस्तु मन्दुरायां " वाजिशाला

निशायां प्रौढायां शीघ्रमावयोः संगमो भवत्वि-
त्यभिप्रायः ॥ २ ॥

अस्तं याते मुकुलनलिनीबान्धवे सिन्धुपुत्रे
प्राचीभागे प्रमदमुदिते पक्वनारिङ्गपिङ्गे ।
रामं कामं गुरुजनगिरा मन्दिरं सुन्दरं स्वं
रम्भोरूस्तं जनकतनया नन्दयन्ती जगाम ॥ ३ ॥

प्राचीभागे सरागे तरणिविरहिणि क्रान्तमुद्रे समुद्रे
निद्रालौ नीरजालौ विकसितकुमुदे निर्विकारे चकोरे ।
आकाशे सावकाशे तमसि शममिते कोकलोके सशोके
कन्दर्पेऽनलपदर्पे वितरति किरणान् शर्वरीसार्वभौमः ४॥

---

तु मन्दुरा " इत्यमरः । मेदुरं च मन्दुरा चेति द्वन्द्वैक्यम् । एतेनो-न्मादावस्था द्योतिता । सोक्ता रसोदधौ । " प्रौढानन्दायत्तो विर-हाद्यो तद् भ्रम उन्मादः । " ॥ २ ॥

अथ तयोः रतिगृहप्रवेशमाह—अस्तमिति ॥ मुकुलितायाः नलि-न्या बान्धवे विकासहेतौ सूर्ये अस्तं याते सति प्राचीभागे पूर्वदि-ग्भागे प्रमदं यथा स्यात्तथा सिन्धुपुत्रे चन्द्रे उदिते सति रामं नन्दयती जगाम । कामम् अनिशम् । " अकामानुमतौ कामः स्पृ-हायामपि संमतः । " इति धरणिः । एतेन त्रपा द्योतिता । सुन्दरं रामं मन्दिरं वा । उक्तं च कलाविलासे । " रम्यपक्षिस्वानन्दं नव-चित्रकुलाकुलम् । स्रक्ताम्बूलार्हशयनं गृहं सुरतसुन्दरम् ॥ " ॥ ३ ॥

पुनरपि सिंहावलोकनन्यायेन चन्द्रोदयमाविष्करोति—प्राचीभागे इति ॥ तरणिविरहिण्यपि प्राचीभागे सरागे सति । एतेन चन्द्रद-र्शनात् सत्योऽपि स्त्रियः परपुरुषानुरागं कुर्वन्तीति ध्वनितम् । यतः पूर्वायाः दिशस्तरणी रतिप्रियस्तथापि सरागा जातेति भावः । " य-

भविष्ये रामशापेत्यन्तनिकटवर्त्तिनि कोकलो-
कानामकस्मात् महोत्पातनिमित्तं पार्श्वस्थिता-
नामपि प्रियाणामनवलोकतः शोकसम्भवः ॥ ५ ॥

स्वैरं कैरवकोरकान् विदलयन् यूनां मनः खेदय-
न्नम्भोजानि निमीलयन् मृगदृशां मानं समुन्मूलयन् ।
ज्योत्स्नां कन्दलयंस्तमः कवलयन्नम्भोधिमुद्वेलयन्
कोकानाकुलयन् दिशो धवलयन्निन्दुः समुज्जृम्भते ॥ ६ ॥

अपि च

अद्यापि स्तनतुङ्गशैलशिखरे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
उद्यन्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥ ७ ॥

---

त्रोदेति रविः सैव प्रिया तस्याश्च स प्रियः । " इत्यागमोक्तत्वात् । सावकाश इति गृहादिदर्शनमेव तत्रावकाशः तमसि शमं नाशं गते सति कोकाश्चक्रवाकाः तेषां लोके समूहे शर्वरीसार्वभौम इति । शर्वरीभूपतिश्चन्द्र इति ॥ ४ ॥

ननु कोकानां कुतः शोक इत्यपेक्षायामाह—भविष्ये इति गद्यम् ५॥

पुनश्चन्द्रमेव विशिनष्टि—स्वैरमित्यादिचतुर्भिः ॥ युवत्यश्च युवानश्च यूनस्तेषां यूनाम् अत्रैकशेषः । " पुमान् स्त्रिया " इत्यनेन स्त्रिया सहोक्तौ पुमान् शिष्यत इति । कन्द एव कन्दलः स्वार्थे लच् । समूहं कुर्वन्नित्यर्थः । अन्यत्सुगमम् ॥ ६ ॥

तत्रोदये सरागं चन्द्रमवलोक्य कविरुत्प्रेक्षते—अद्यापीति ॥ असौ शशी तत्क्षणादेव तदुदयमात्रादेव फुल्लन्तो ये कैरवास्त एव कोशाः खड्गकोशास्तेभ्यो निःसरन्ती या अलिश्रेणी भ्रमरपङ्क्तिः सैव

यातस्याऽस्तमनन्तरं दिनकृतो वेषेण रागान्वितः
स्वैरं शीतकरः करं कमलिनीमालिङ्गितुं योजयन् ।
शीतस्पर्शमवाप्य संप्रति तया युक्ते मुखाम्भोरुहे
हास्येनैव कुमद्वतीवनितया वैलक्ष्यपाण्डूकृतः ॥ ८ ॥
कर्पूरैः किमपूरि किं मलयजैरालेपि किं पारदै-
रक्षालि स्फटिकान्तरैः किमघटि द्यावापृथिव्योर्वपुः ।
एतत्तर्कय कैरवक्लमहरे शृङ्गारदीक्षागुरौ
दिक्कान्तामुकुरे चकोरसुहृदि प्रौढे तुषारत्विषि ॥ ९ ॥

---

कृपाणः खड्गः तमाकर्षति प्रसह्य गृह्णाति । दिवा तत्र सुप्ता अलयः चन्द्रोदयादेव सर्वे पङ्क्तीभूय एकदैव निःसरन्ति इति प्रसिद्धम् । कीदृशः उद्यन् उद्गच्छन् इति । क्रोधादालोहितः इव । इति किम् एषः मानः सीमन्तिनीनां हृदि अद्यापि मय्युद्यते सति स्थातुं वाञ्छतीति । कीदृशे हृदि स्तनावेव तुङ्गे शैलशिखरे यत्र ॥ ७ ॥

रागमुत्प्रेक्ष्य पाण्डुतामुत्प्रेक्षते—यातस्येति ॥ अनन्तरं पक्षान्तरे शीतकरः अस्तं यातस्य दिनकृतः सूर्यस्य वेषेण रागान्वितो जातः यादृगरुणो रविरस्ति तादृगुदये चन्द्रोऽभूदिति भावः । किं कुर्वन् स्वैरं यथेष्टं कमलिनीं सूर्यप्रियाम् आलिङ्गितुं करं किरणरूपं हस्तं योजयन् सन् । संप्रति तदैव तया कमलिन्या शीतस्पर्शमवाप्य मुखाम्भोरुहे स्वकीयमुखारविन्दे युक्ते मुद्रिते सति रुद्धे इत्यपि पाठः । कुमुद्वतीवनितया कुमुदिनी एव चन्द्रकान्ता तया कृतं यद्वैलक्ष्यं लज्जातिरेकस्तेन पाण्डूकृता रागान्वितोऽपि पीतत्वमागत इति केनैव हास्येनैव परागाभिनमेनं दृष्ट्वा यत्कुमुदिनीविकसनं तदेव हासः । उक्तं च । “ आत्मनश्चरिते तस्य ज्ञातेऽन्यैर्यत्र जायते । अपत्रपेति महती तद्वैलक्ष्यमुदाहृतम् ॥ ” ॥ ८ ॥

रामः सखीं प्रति—कर्पूरैरिति ॥ “द्यावाभूमी च रोदसी” इत्यमरः ।

अमृतममृतरश्मेर्मण्डलस्यानुभूय
द्विजचतुर चकोर प्रीतिरङ्गारकेषु ।
प्रभवति भवदीया चेद्विधातुर्विधानं
तदिह पुनरपि स्यात्कोऽन्यथा कर्तुमीशः ॥ १० ॥

चक्रक्रीडाकृतान्तस्तिमिरचयचमूस्फारसंहारचक्रं
कान्तासंयोगसाक्षी गगनसरसि यो राजते राजहंसः ।
संभोगारम्भकुम्भः कुमुदवनवधूबोधनिद्रादरिद्रो
देवः क्षीरोदजन्मा जयति रतिपतेर्बाणनिर्वाणशाणः ११॥

---

अक्षालि प्रक्षालितं किं दिक् पूर्वा सैव कान्ता तस्याः मुकुरे तत्तुल्ये अन्यत् स्पष्टम् ॥ ९ ॥

अङ्गारकोरकाशनं चकोरमवलोक्याह—अमृतमिति ॥ भो द्विजचतुर पक्षिविदग्ध चकोर अमृतरश्मेर्मण्डलस्य चन्द्रबिम्बस्याऽमृतमनुभूय चेद्भवदीया प्रीतिः अङ्गारकेषु प्रभवति तत्तदा विधातुरीश्वरस्य विधानं पुनरप्यन्यथा कर्त्तुं कः पुमान् ईशः स्यात् न कोऽपीति भावः ॥ १० ॥

अथ पञ्जरस्था मन्दिरसारिका सखीनां स्वमन्दिरगमनायाऽशिषं पठति—चक्रेति ॥ क्षीरसमुद्रात् जन्म प्रादुर्भावो यस्य एवंभूतो देवश्चन्द्रो जयति । तमेव विशिनष्टि । अन्धकारनिचयसेनायाः स्फारो विस्तारस्तन्नाशाय चक्रम् आविष्टलिङ्गत्वादखण्डत्वं राजहंस इव । लोपोप्यच, औणादिकः । कुमुदवनवधूनां बोधे विकासे सति निद्राया दरिद्रो यस्माद्यदुदये विकासितत्वात् पुनर्न सङ्कोच इति भावः । रतिपतेर्बाणानां निर्वाणस्तीक्ष्णीकरणं तस्य शाणः उपलविशेषः । यद्वा । निर्वाणो मोक्षस्तस्य शाणः सहायकृत् कामबाणानिर्मुक्तौ सत्यां सहायकृदिति भावः । " निर्वाणस्तीक्ष्णमोक्षयोः " इति चरकः । " उत्तेजकोपले शाणः पक्षेप्यात्मगते पुमान् । " इति धरणिः ॥ ११ ॥

( इत्याकर्ण्य चन्द्रमण्डलशाणोत्तीर्णो रतिपतेर्बाणो जानकीरामचन्द्रयोर्वक्षस्थले निपतति इति श्लोकाभिप्रायमवगम्य निष्क्रान्तः सर्व आलिजनः । अत्रापि तरुणरात्रौ शुकसारिकादीनां पक्षिणां मधुरस्वरैर्मदनोर्मिः संसूचिता । )

रामः—

अङ्के कृत्वा जनकतनयां द्वारकोटेस्तलान्तात्
पर्यङ्काङ्के विपुलपुलकां राघवो नम्रवक्त्राम् ।
बाणान् पञ्च प्रवदति जनः पञ्चबाणोऽप्रमाणै-
र्बाणैः किं मां प्रहरति शनैर्व्याहरन्ती जगाम ॥१२॥

जानकी—

गाढं गाढं कमलमुकुलं पुण्डरीकाक्षवक्षः-
पीठं काठिन्यमपि कुचयोर्जानकी मानकीर्णा ।

---

अथ जानकीरामयोः शृङ्गारं वर्णयति—अङ्के कृत्वेति ॥ द्वारकोटेः द्वाराग्रभागस्य तलान्तात् जनकतनयाम् अङ्के कृत्वा पर्यङ्काङ्के पर्यङ्कमध्ये निनाय आनयत् । विपुलपुलकामेतेन मुखस्मितस्निग्धसात्विको दर्शितः । उक्तं च रसोदधौ । "साक्षादीश्वरयोगो यैस्ते मुख्या मनीषिभिर्ज्ञेयाः।" इति । "द्रढिमरतिप्रकारा ये स्युः स्निग्धा मतास्त एवात्र ।" इत्यपि । शनैर्मनसि उवाह बालायाः प्रभूतरोमाश्चदर्शनेन पञ्चबाणेप्यपरिमितबाणभ्रान्तिः ॥ १२ ॥

गाढं गाढमिति ॥ मानगीर्णा मा मा स्पृशेत्यादिव्याजवचनभाषिणी सीता सदयहृदयं च अनिलस्वागताय वायोरागमनाय आ ईषत् शिथिलं चकार । किं कृत्वा पुण्डरीकाक्षो रामस्तद्वक्षःपीठं कमलमुकुलं तत्सदृशकोमलं कुचयोरपि काठिन्यं मत्वा कीदृशी कामैः कामसंबन्धिभावैः पूर्णा कामकलाविदग्धा इत्यर्थः । स्वामि-

पूर्णां कामैः शिथिलमनिलस्यागमायाचकार
स्फीतं नीतं सदयहृदयं स्वामिनालिङ्ग्य मत्वा ॥१३॥
अन्योन्यं बाहुपाशग्रहणरभसमाशीलिनोस्तत्र यूनो भूयो
भूयः प्रभूताभिमतफलभुजोर्नन्दतोर्जात एषः । संसारो
गर्भसारो नव इव मधुरालापिनोः कामिनोर्मां गाढं चा-
लिङ्ग्य गाढं स्वपिहि नहि नहीति च्युतो बाहुबन्धः १४

---

ना श्रीरामेणापि गाढं गाढं यथा स्यात्तथा आलिङ्ग्य स्फीतं नीतं स्फीताख्यं चुम्बनं प्रापितम् । तदुक्तं कामावतारे । "नकारबहुलक्षिप्तहस्तान्तं वञ्चिताधरम् । रभसा गण्डसंस्पर्शस्फीतं तच्चुम्बनं मतम् ॥" इति । कमलकलिकाकोमलं पुण्डरीकाक्षवक्षःकुचकाठिन्येन व्यथितं मा भूदिति शङ्कया बाहुपाशमीषत् विसृज्य पवनप्रवेशाय हृदयं शिथिलमाचकारेति भावः ॥ १३ ॥

अन्योन्यमिति ॥ तत्र संभोगसमये भूयो भूयो नन्दतोर्मुहुर्मुहुर्वर्द्धमानयोर्यूनोः जानकीरामचन्द्रयोः एष संसारो नव इव जातः अज्ञानरसप्रदो जात इति भावः। गर्भे सारः सुखं यस्य सः। कीदृशयोः परस्परं बाहुपाशग्रहणयो रभसोतिरेकस्तमभिव्याप्य शीलितुं शीलं ययोस्तौ तथा । पुनः कीदृशयोः प्रभूतं बहु अभिमतम् इष्टफलं कामफलं भुञ्जतोः यथेच्छानेककलाविदग्धयोरिति पुनरध्याहारः । कामिनोः कामरसवर्धनविदग्धयोरिति । बाहुबन्धच्युतः शिथिलो जात इति किं रामेणोक्तं मा इति मां गाढमालिङ्ग्य स्वपिहि । सीतयोक्तं न हि नहीति । अत एव मधुरालापिनोः स्वपिहि नहि नहीत्यादि माधुर्यम् । श्यामं कामसमाकृतिं राममालिङ्ग्य उत्कण्ठितापि कामाकुलापि जानकी कुलसंभूतित्वलज्जया नवसङ्गमतया च भर्तृमनोहरणाय च नहि नहीति व्याहृत्य दुःसहमपि मारज्वरं सहते स्म ॥ १४ ॥

---

१ जानकीरामचन्द्रयोः ।

वक्त्रे ततः फणिलतादलवीटिकां स्वे
विन्यस्य चन्दनघनावृतपूगगर्भाम् ।
रामोऽब्रवीदयि गृहाण मुखेन बाले
तच्छद्मना तदधरं मधुरं प्रपातुम् ॥ १५ ॥

मन्दं मन्दं जनकतनया तां चतुर्धा विधाय
स्वैरं जह्रे तदधरमधु प्रेमतो मीलिताक्षी ।
मेने तस्यास्तदनुकवलान्धर्मकामार्थमोक्षान्
रामः कामं मधुरमधुरं ब्रह्म पीत्वापि तस्याः ॥ १६ ॥

भाति स्म चित्तस्थितरामचन्द्रं
सा रुन्धती निर्गमशङ्कयैव ।

---

वक्त्रे इति ॥ चन्दनं खदिरं घनः कर्पूरस्ताभ्यामावृतः पूगः क्रमुको गर्भे यस्यास्ताम् । “ चूर्णं कस्तूरिकागर्भं खदिरं चन्दनं मतम् । ” इति धरणिः ॥ १५ ॥

ततः किं जातमित्यपेक्षायामाह—मन्दं मन्दमिति ॥ जनकतनया वीटिकां चतुर्धा विधाय तत्रापि मन्दं मन्दं शनैः शनैः तत्रापि स्वैरं स्वमुखानुसारं यथा तथा जह्रे हृतवती । चतुर्धात्वे हेतुः कुतस्तस्य रामस्य यत् अधरमधु तस्मिन् यत्प्रेम तस्मादेकदैव ग्रहणे तदधरायोगः स्यादिति भावः । मन्दमन्दत्वे हेतुः कीदृशी मीलिताक्षी तदधरस्पर्शानन्दान्नेत्रमीलने सति तद्धरणायोगात् मन्दत्वं तदनुग्रहणानन्तरं तस्या वीटिकायाश्चतुरः कवलान् धर्मार्थकाममोक्षान् तत्प्राप्तिसमान् मेने । रामोऽपि तस्याः सीताया मधुरम् अधरं पीत्वा तमेवाधरं ब्रह्म मेने ब्रह्मानन्दसमं मेने । एतदधिकं ब्रह्मसुखं नास्तीति भावः ॥ १६ ॥

भातीति ॥ छद्मना मिषेण स्वीकृतनिद्रा भाति स्म । स्तनयोरु-

स्तनोपरिस्थापितपाणिपद्मा
संजातनिद्रा सरसीरुहाक्षी ॥ १७ ॥

( तत्र मैथिलसुतोरस्थलनिक्षिप्तयक्षकर्दमे सानन्दपतित-
भ्रमरमालोक्य )

मदनदहनशुष्यत्कान्तकान्ताकुचान्त-
र्हृदि मलयजपङ्के गाढबद्धाखिलाङ्घ्रिः ।
उपरिविततपक्षो लक्ष्यतेऽलिर्निमग्नः
शर इव कुसुमेषोरेष पुङ्खावशेषः ॥ १८ ॥

( तत्रावसरे )

पृथुलजघनभारं मन्दमान्दोलयन्ती
मृदुचलदलकाग्रा प्रस्फुरत्कर्णपूरा ।

---

परि स्थापितं पाणिपद्मं यया सा । उत्प्रेक्षते किं कुर्वतीव चित्त-स्थितश्चासौ रामचन्द्रश्च तं निर्गमशङ्कया हृदयान्मा निर्गच्छ-त्विति भयेन रुन्धतीव ॥ १७ ॥

मदनेति ॥ कामाग्निना शुष्यन्यो रमणीयः सीतायाः कुचान्तः स्तनमध्यदेशस्तद्युक्ते हृदि यो मलयजपङ्कस्तास्मिन्निमग्नोऽलिर्भ्रमरो लक्ष्यते उत्प्रेक्ष्यते । कीदृशः गाढं यथा स्यात्तथा बद्धा अखिला अङ्घ्रयो यस्य अत एव उपरि विततौ पक्षौ यस्य उड्डीनासंभ-वात् । क इव लक्ष्यते एष कुसुमेषोः शर इव पुङ्खमात्रावशिष्टः अन्यत् हृदयमग्न इति ॥ १८ ॥

द्राक् ईषद्व्याजेन भावाविष्करणदम्भेनाश्रिता निद्रा यया सा अन्य-था वैजात्यमायाति जानकी पतिं प्रमदयाति प्रकृष्टं हर्षयति। हर्ष प्र-कारमेवाह। मन्दं यथा स्यात्तथा पृथुलं मांसलं जघनं तस्य यो भारः तम् आन्दोलयन्ती तोलयन्ती । पुनः कीदृशी मृदूनि स्पर्शार्हाणि

प्रकटितभु ... ... ...
प्रमदयति पतिं द्राग् जानकी व्याजनिद्रा॥१९॥

( तामपि दूरस्थां मन्वानः )

तदनु जनकपुत्रीवक्त्रमालोक्य रामः
पुनरपि पुनरेवाघ्राय चुम्बन्न तृप्तः ।
स्तनतटभुजमूलोरस्थलं रोमराजि
मदनसदनमासीच्चुम्बितं पञ्चबाणः ॥ २० ॥

श्रीरामपादाः—

निद्रालुस्त्रीनितम्बाम्बरहरणरणन्मेखलारावधाव-
त्कन्दर्पारब्धबाणव्यतिकरतरलाः कामिनो यामिनीषु ।

---

चञ्चलानि अलकाग्राणि यस्याः प्रकटितं भुजमूलं यया दर्शिता स्त-न्यलीला स्तनयोः परिसरशोभा यया। एतत्पद्येन कुञ्चिताख्यं श-यनं दर्शितम्। तदुक्तं कामावतारे। "प्रमीलादम्भतो यत्र प्रीतिदान-दिदित्सया। स्वशोभा दीयते नेत्रे शयनं तद्विकुञ्चितम् ॥ " ॥१९॥

तदनु व्याजाविष्कृतभावदर्शनानन्तरं रामः जनकपुत्रीवक्त्रम् आलोक्य पुनः पुनः आघ्राय चुम्बन्नपि तृप्तो न जातः । स्तनत-टभुजमूलोरस्थलं रोमराजि मदनसदनं चापि रामेण चुम्बितम् आ-सीदिति । अत्र द्वन्द्वैक्यम् । कीदृशः पञ्चबाणः कामोऽस्यास्तीति तथा सकाम इति। अर्शआदिभ्योऽच् । एतेन पञ्चशराख्यं चुम्बनं द्योतितम् । तदुक्तं वात्स्यायनीये । "भुजमूले स्तनौ वक्षो वलिं मद-नसद्म च । पद्मिनी चुम्बिता द्रावं याति पञ्चशराभिधम् ॥ " ॥२०॥

अथ भयलोलालिङ्गनं द्योतयितुं पद्यमवतारयति—निद्रेति॥ ते प्र-सिद्धाः सकामाः श्रीरामपादाः जघनमेव गिरिदरी सैवाश्रयं निलय-स्थानं श्रयन्ते इति । कुत इत्यपेक्षायामाह । निद्रा जाता यस्याः

ताटङ्कोपान्तकान्तग्रथितमणिगणोद्गच्छदच्छप्रभाभि-
र्व्यक्ताङ्गास्तुङ्गकम्पा जघनगिरिदरीमाश्रयंते श्रयंते२१

( जानकी प्रबुद्धा )

स्पृहयति च बिभेति प्रेमतो बालभावा-
न्मिलति सुरतसङ्गेऽप्यङ्गमाकुञ्चयन्ती ।
अहह न हि न हीति व्याजमप्यालपन्ती
स्मितमधुरकटाक्षैर्भावमाविष्करोति ॥ २२ ॥
निधुवनघनकेलिग्लानिभावं भजन्त्या
रमण रभसशङ्कातङ्कि चेतः प्रियायाः ।

---

एवंभूता स्त्री सीता तस्या नितम्बवस्त्राकर्षणे सति रणन्ती शब्दिता या मेखला तस्याः रावेण धावन् यो कन्दर्पः तेनारब्धः संधितो यो बाणस्तेन यो व्यतिकरो भयं तेन तरलाः आत्मानं गोपायितुं चञ्चला अन्योऽपि चौर्यं कुर्वन् केनापि ज्ञात अलं पलायितुम् आत्मानं गोपायति तथैतेऽपि कामचौर्यम् अन्यस्मिन् अन्यावभासो व्यतिकरः । अत्र निर्भयत्वेन भयं तर्हि निलीय तिष्ठन्तु इति चेत्तत्राह । ताटङ्कयोरुपान्तेषु ग्रथिताः ये मणिगणा रत्नसमूहास्तेभ्य उद्गच्छन्तो याः उज्ज्वलाः प्रभा दीप्तयस्ताभिर्व्यक्ताङ्गाः प्रकटीकृतशरीराः अत एव ज्ञातेषु सत्सु तुङ्गः कम्पो येषां ते एवंभूताः सन्तः आश्रयन्ते । उक्तं च कामावतारे । " निर्निंद्रिता मृगदृशो रसनाँ यदैव संमोचनाय विभयीकृतमानसोलम् । तद्भावकम्पमुखतो जघने निलीयमास्थाय तिष्ठति तदा भयलोलमुक्तम् ॥ " इति ॥२१॥

स्पृहेति ॥ भावं मानसं रागम् अन्यत्स्पष्टमेव । प्रेमतः सङ्गं स्पृहयति बालभावाद्बिभेति इति योज्यम् ॥ २२ ॥

अत्यन्तं कामबाणभिन्ना सती वीतलज्जा जानकी । निधुवनेति ॥ हे रमण स्वमुखानुसारं निर्विशङ्कं यथा स्यात्तथा मे रसनां पिब

अधरदशनसर्पत्सीत्कृताया धृतायाः
पिब पिब रसनां मे कामतो निर्विशङ्कम् ॥२३॥

रामः—( सानन्दं जानकीवाग्विलासमुल्लासयति लालित्यशालिनालापेन । )

वाचां गुम्फेन रम्भाकरकमलदलोदारसंचारचञ्चत्तन्त्रीसंजातमञ्जुस्वरसरसतरोद्गारताराक्षरेण ।

---

पिब आदरे वीप्सा । अत्रास्वादनमेव पानम् । ननु रमित्वा यास्यामीति चेत्तत्राह । प्रियायाः मम चेतः रभसशङ्कातङ्कि रभसो रताधिक्यं ततो या शङ्का भयं तेनातङ्कः कम्पो यस्मिन् ततः एवंभूतं जातम् । रमणायाऽक्षमास्मीति भावः । यद्वा । सर्वमेकं पदं रमणस्य तव यो रभसो रताधिक्यं तस्माद्या शङ्का तया यः आतङ्कस्तद्युक्तं चेतः तदेव प्रियं यस्याः मे । कुतो न क्षमसीत्यपेक्षायामाह । निधुवने रतौ घना या बह्वी केलिस्तया द्रावणादिना ग्लानिभावं निःप्राणतां भजन्त्याः । उक्तं च रसोदधौ । "अन्तश्चन्द्रं देहे यत्र बलं पुष्टिकृद्द्रवेदस्याः । तद्विगमा इत्याधिक्यश्रमनिःप्राणता ग्लानिः॥" पुनः कीदृश्याः अधरस्य दंशनं खण्डनं तेन सर्पत् निर्गच्छत् सीत्कृतं सीत्काररवो यस्याः । यद्वा । अधरदशनयोः अधरदन्तयोरेव सर्प्पत् सीत्कृतं यस्याः । उक्तं च पञ्चसायके । "द्रवति च यदि नारी प्रौढरागान्नियुक्ता मृदुनिधुवनयोगे दन्तसंधौ गभीरम् । द्रवति रदनवासः किंचिदुन्मथ्य भूयः कथितमिह मुनीन्द्रैः सीत्कृतं रागकारि ॥" अस्मिन्पद्ये सीत्कृतमाविष्कृतम् । पुनः धृतायाः अङ्के वश्यप्रेष्ठेयं नायिका । तदुक्तं रसोदधौ । "सीत्कृतसंज्ञाभिमुखो यस्याः सततं प्रियो भवेदनुगः । वश्यप्रेष्ठा सोक्ता व्रजरमणीमण्डनं यथा राधा ॥" इति ॥ २३ ॥

वाचामिति ॥ रामराज्ञी चरस्थावरां स्थास्नुचरिष्णुरूपां धरित्रीं सुरभयति सुरभीकरोति । केन वाचां गुम्फेन रचनया । "संदर्भो

प्रत्यग्रोन्निद्रनाकद्रुमकुसुमनवामोदसंवादमैत्री-
पात्रीभूतेन धात्रीं सुरभयति चरस्थावरां रामराज्ञी॥२४॥

(अथ रामस्तामाह्लादयति)

अरण्यं सारङ्गैर्गिरिकुहरगर्भाश्च हरिभि-
र्दिशो दिङ्मातङ्गैः श्रितमपि वनं पङ्कजवनैः।
प्रियाचक्षुर्मध्यस्तनवदनसौन्दर्यविजितैः
सतां माने म्लाने मरणमथवा दूरसरणम्॥२५॥

---

रचना गुम्फः" इत्यमरः। कीदृशेन गुम्फेन रम्भायाः अप्सरस-स्तस्याः करावेव कमले तयोर्यानि दलान्यङ्गुलयः तासां य उदारः संप्रमादवान् संचारस्तद्रागव्यञ्जकं तन्त्रीगमनं तेन चञ्चन्ती सशब्दा या तन्त्री वीणा ततः संजातो यो मञ्जुस्वरः कोमलालापः ततोऽपि सरसतरोऽतिशयेन रसवान् य उद्गारः उद्गाराख्यं गीतं तस्मिन् ताराणि व्यक्तान्यक्षराणि यस्मिन् तत्। तदुक्तं संगीते। "सात्वती पञ्चमश्रीकप्रीतिकण्ठविराजितम्। त्रिपदं सध्रुवं गीतमुद्गाराख्यं मतं बुधैः॥" इति। पुनः प्रत्यग्रं नवीनम् उन्निद्रं विकासितं च तन्नाकद्रुमकुसुमं पारिजातपुष्पं तस्य यो नवामोदस्तात्कालिको गन्धः स एव या संवादमैत्री वचनचातुरी तस्याः पात्रीभूतेन पारिजातकुसुमादप्यतिसुगन्धेनेत्यर्थः॥ २४॥

अरण्यमिति॥ सारङ्गैर्मृगैर्हरिभिः सिंहैः मातङ्गैः गजैः पङ्कजवनैः पद्मव्रातैः वनं जलम् "जीवनं भुवनं वनम्" इत्यमरः। कीदृशैः सर्वैः प्रियायास्तव चक्षुःसौन्दर्येण मृगाः मध्यप्रदेशसौन्दर्येण कमलवनं विजितमिति मृगादिभिररण्यादिश्रयणं युक्तमित्याह। सतां संभावितानां माने चित्तोन्नतौ म्लाने सति केनापि दूषिते सति मरणं मुख्यं तदभावे दूरसरणं देशांतरदुर्गाश्रयणं योग्यम्। अत एभिर्दुर्गमेवाश्रितमिति भावः। अयि प्रिये अयीति कोमलामन्त्रणे अपि-

वक्त्रं वनान्ते सरसीरुहाणि
भृङ्गाक्षमालां जगृहुर्जपाय ।
एणीदृशस्तेप्यवलोक्य वेणी-
मङ्गं भुजङ्गाधिपतिर्जुगोप ॥ २६ ॥
स्वर्णं सुवर्णं दहने स्वदेहं
चिक्षेप कान्तिं तव दन्तपङ्क्तिम् ।
विलोक्य पूर्णं मणिबीजपूर्णं
फलं विदीर्णं ननु दाडिमस्य ॥ २७ ॥

---

र्वा तत्र संभावना । "गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि ।" इत्यमरः ॥ २५ ॥

वक्त्रमिति ॥ सरसीरुहाणि पद्मानि एणीदृशस्ते वक्त्रं विलोक्य तत्सौन्दर्यार्थं वनान्ते जलमध्ये जपाय इष्टाराधनाय भृङ्गश्रेण्येवाक्षमाला तां जगृहुः । एणीदृश इति पदेन मृग्योऽपि वनान्ते अरण्ये मध्ये तृणादिभक्षणादिना नेत्रशोभाप्राप्त्यर्थं तपस्यन्तीत्यर्थः । भुजङ्गाधिपतिरपि ते वेणीमवलोक्य तत्सादृश्यहीनमङ्गं जुगोप । अन्यथा स्वशरीरगोपनेन को लाभ इति । यद्वा । एणीदृशः पदद्वयं एणी मृगी जात्येकवचनं ते दृशः दृष्टीरवलोकनवैदग्ध्यानेकत्वाद्बहुवचनम् । अवलोक्य वनान्ते अरण्यं दुर्गं नेत्ररूपम् अङ्गं जुगोप त्वन्नेत्रसादृश्यभाववैलक्षण्यत्वात् ॥ २६ ॥

स्वर्णमिति ॥ सुष्ठु वर्णो यस्य एवं भूतमपि स्वर्णं सुवर्णं तव कान्तिं विलोक्यात्मगतमूलाकर्षणाय त्वदङ्गस्य साम्यत्वकथनाय च स्वदेहं दहने चिक्षेप । न तु तद्वर्णं प्राप्तवदिति भावः । हीरकमणितुल्यबीजपूर्णमपि दाडिमस्य फलं तव दन्तपाङ्क्तिं विलोक्य तूर्णमेव विदीर्णं स्फुटितम् । तदुपमानबहिष्कृतत्वादिति भावः॥ २७॥

वदनममृतरश्मिं पश्य कान्ते तवोर्व्या-
मनिलतुलनदण्डेनास्यवार्द्धौ विधाता ।
स्थितमतुलयदिन्दुः खेचरोभूल्लघुत्वात्
क्षिपति च परिपूर्त्यै तस्य ताराः किमेताः॥२८॥

जानकी–( सानन्दं सोत्कण्ठा च प्राणवल्लभमाह्लादयति )

रमण चरणयुग्मं तावकं भावयित्वा
मधुरगिरमुदारं रामदासी ब्रवीमि ।
कृतमपि गुरु धात्राऽस्वाद्य निर्णीयतां मे
वदनममृतरश्मेर्मण्डलं वा प्रियेण ॥ २९ ॥

रामः–( सानन्दम् )

सीतां मनोहरतरां गिरमुद्गिरन्ती-
मालिङ्ग्य तत्र बुभुजे परिपूर्णकामः ।

---

वदनमिति ॥ हे कान्ते प्रिये पश्य मुखगौरवं प्रत्यक्षमवलोक्य विधाता उर्व्यां भूमौ स्थितं तव वदनं वार्द्धौ क्षीरसमुद्रे स्थितं । शीतरश्मिं गुणसाम्यातिरेकज्ञापनाय अनिल एव तुलादण्डस्तेनातुलयत् तोलयामास । तदेन्दुः लघुत्वात् अल्पगुणाश्रितत्वात् खेचर उन्नतोऽभूत् । तदास्य चन्द्रस्य पूर्त्यै यास्ताराः अश्विन्याद्याः क्षिपति स्म तस्य चन्द्रस्य पूर्त्यै एतास्ताराः किं कियन्त्यः न कियन्त्य इत्यर्थः । गुणगौरवात्तव वदनमत्रैव स्थितं चन्द्रस्तु गुणाभावादूर्ध्वं गत इति भावः ॥ २८ ॥

ननु सिताखण्डश्चेदल्पतरः गुडो बहुतरः तर्हि किं गौरवादेव गुणाधिक्यमित्यपेक्षायामाह–रमणेति॥भावयित्वा निषेव्य धात्रा गुरु कृतमपि मे वदनं तथा प्रियेण त्वया आस्वाद्य अमृतरश्मेरपि मण्डलं वा निर्णीयताम् । यत्रैव स्वादातिशयस्तत्रैव गौरवमिति भावः२९

सीतामिति ॥ मनोहरतरां गिरमुद्गिरन्तीं सीतां परिपूर्णकामः

रामस्तथा त्रिभुवनेऽपि यथा न कोऽपि
रामां भुनक्ति बुभुजे न च भोक्ष्यतीशः ॥ ३० ॥

मृदुसुरभिसुवर्णस्फीतकक्षापुटोद्य-
ल्ललितभुजलतायाः संपुटालिङ्गितायाः ।
सुरतरसवशाया राघवस्य प्रियाया
हरति हृदयतापं कापि दिव्या स्तनश्रीः ॥ ३१ ॥

आगामिदीर्घविरहश्चिरमाविरासीत्
ज्ञात्वैव रङ्गभवनेऽद्भुतकामकेलिः ।

---

कामकलाविलासो यत्र । अन्यथेश्वरत्वस्य क्षतिः स्यात् । रामः सीतां तथा बुभुजे । यथा कोपीश्वरो भूत्वा नाद्य भुनक्ति न पुरा बुभुजे नाग्रे भोक्ष्यतीति ॥ ३० ॥

अथैतद्वर्णनमुपसंहरति—मृद्विति ॥ प्रियायाः कापि अनिर्वचनीयां दिव्या अलौकिकी स्तनश्रीः राघवस्य हृदयतापं हृत् अयतीति हृदयः कामस्तस्य तापं व्यथां हरतीति । कीदृशी मृदुः स्पर्शासहः सुरभिः सुगन्धः सुवर्णो गौरोज्ज्वलः स्फीतः किंचिदुन्नतः स चासौ कक्षापुटश्च तस्मादुद्यते ललिते भुजलते यस्याः सा तथा । कक्षापुटोद्यदिति पाठे स एवार्थः । एवंभूतात्कक्षापुटादुद्यते उपरि भुजमूले यस्याः । हरतु इति पाठः । तत्राशीः किं पुनः कीदृश्याः संपुटालिङ्गितायाः संपुटाख्यालिङ्गनेनालिङ्गितायाः । उक्तं च पञ्चसायके । "ऊर्ध्वं गते मध्यगते युवत्याः पार्श्वस्थितायाः परिरभ्य देहम् । यूनः स्त्रियो लोलनतो रतज्ञैरत्युद्भवः संपुटनामधेयः ॥" अयमेवोदयः तेनान्यथोक्तः । " उत्तानसुप्तप्रमदोपरिस्थः कक्ष्यां समावर्ज्य तदूरुयुग्मम् । संमर्दयानः स्तनमण्डलं यद्रमेत स स्यात किल संपुटाख्यः ॥ " ॥ ३१ ॥

आगामीति ॥ रङ्गभवने सुरतागारे चिरं कोऽपि भ्रमः आविरासीत् । कयोः तयोः सीतारामयोः । भ्रमेऽपि " चिरमव्ययम "

श्रुत्वा तयोर्गिरमपूजयदोतुपत्नी-
मुद्गीर्णकर्णसरणां चरणायुधानाम् ॥ ३२ ॥

इति श्रीहनुमन्नाटके द्वितीयोऽङ्कः ॥ २ ॥

# अथ तृतीयोऽङ्कः ।

भुक्त्वा भोगान्सुरङ्गान्कतिपयसमयं राघवो धर्मपत्न्या
सार्द्धं वर्द्धिष्णुकामः श्रवणमुनिपितुः प्राप हा शापकालम्।

इति चरकः । किं कृत्वैव आगामी भविष्यो यो दीर्घविरहः दण्डकारण्यप्रस्थानरूपस्तं ज्ञात्वैव । कीदृशी सीता अद्भुताः कामकेलयो यस्याः सा । अस्य रसस्यादौ तुरगांस्ताडयामासेति भ्रमः उक्तः। प्रान्ते बिडालपत्नीपूजनमेव भ्रमः अतः आद्यन्तभ्रमादानिष्टमेव जातम् । यद्वा स्पष्टमेवार्थः । रङ्गभवने अद्भुतकामकेलिः कामक्रीडा चिरमाविरासीत् । अन्यत्पूर्ववत् । अन्यत्कविनैव व्याख्यातम् । भ्रममेवाविष्करोति। चरणायुधानामिति। तयोः जानकीरामचन्द्रयोर्मध्ये जानकीचरणायुधानां गिरं श्रुत्वा बिडालपत्नीम् अपूजयत् । अत्र बिडालपत्नीशब्दाद्बिडालपूजने पतिव्रतायाः परपुरुषस्पर्शो मा भूदिति सूचितम् । किमित्यपूजत् एवमुक्तं भवति बालायाश्चेतसि चरणायुधशब्देनैव प्रातरुत्पद्यते नेतरथा अतः पूजिता बिडालपत्नी पूर्ववैरमनुस्मरन्ती चरणायुधमव्यग्रमश्नातु तस्मिन्निवृत्ते प्रातःकालासंभवादनन्ता भवतु यामिनी कामिनी पतिमालिङ्ग्याजस्रं सुखर्मनुभवत्वित्याभिप्रेतोऽर्थः ॥ ३२ ॥

इति श्रीमिश्रदासविरचितहनुमन्नाटकदीपिकायां जानकीविलासो नाम द्वितीयोऽङ्कः ॥ २ ॥

अथ रामवनलीलां वर्णयितुमङ्कमारभते—भुक्त्वेति॥ राघवो रामः धर्मपत्न्या सार्द्धं कतिपयसमयं यथा स्यात्तथा सुरङ्गान् भोगान्

धत्ते तस्मिन्विवस्वान्मलिनकिरणतां हा महोत्पातहेतो-
रुल्कादंडः प्रचंडः प्रपतति नभसः कम्पते भूतधात्री १
दिग्भागो धूसरोऽभूदहनि बहुतरस्फारताराः स्फुरन्ति
स्वर्भानोर्भानवीयग्रहणमसमये रौधिरी बिन्दुवृष्टिः ।
मध्याह्नोर्ध्वास्यकोशश्वगणरुतमतिस्फीतफेरुप्रचारो
वारं वारं गभीरप्रलय इव महाकालचीत्कारघोरः॥२॥

---

कामविलासानष्टौ भोगान् भुक्त्वा श्रवणमुनिपितुर्यज्ञदत्ताख्यवैश्यतपस्विनः शापसमयं प्राप । अत्रेयं कथा । मृगयां गतो दशरथः वनगजभ्रमेण शब्दवेधित्वपरिचयाय कुम्भं जलेन पूरयन्तं श्रवणमुनिम् अदृष्ट्वैव जघान । ततोऽस्य पित्रा यज्ञदत्तेन शप्तः अस्यामेवावस्थायां पुत्रशोकात्परलोकं गमिष्यसीति तं वियोगसमयं प्राप । यद्वा । राघवः एषः दशरथः धर्मपत्न्या सार्द्धं वर्द्धिष्णुकामः अपूर्णकामाभिलाष इति उभयोर्विशेषणम् । भोगानष्टौ उक्तं च । " सुगन्धि वनिता वस्त्रं गीतं ताम्बूलभोजनम् । वाहनं भूषणं चेति भोगाष्टकमुदीरितम् ॥ " शापकालमेव द्योतयति । तस्मिन् समये धत्ते व्यधत्त । भूतार्थे वर्तमानता नाटकालङ्कृतित्वात् । उक्तं च दशरूपके । " प्रकृतं वर्त्तमानत्वं नाटकालंकृतिः परा । " ॥ १ ॥

दिगिति ॥ अहनि दिवैव स्फारो विस्तारः स्वर्भानोः राहोः सकाशात् मध्याह्ने ऊर्ध्वमास्यकोशो येषां ते श्वगणाः सारमेयगणाः तेषां रुतमभूत् । स्फीतो बहुतरः फेरूणां शिवानां प्रचारः इतस्ततः सरणं वारंवारमभूत् । क इव गभीरप्रलय इव। कीदृशः महाकालो रुद्रस्तस्य चीत्कारेण घोरः । कलिकातामहानाटके द्वितीयतृतीयश्लोकयोर्मध्ये । " अत्रान्तरे दशरथस्य चेष्टा । रामं नयचर्यं लाकधमसह च यत् । यौवराज्याभिषेकाय नृपे मतिरभूत्ततः ॥ सुमन्त्रो बहिर्निसृत्य नागरान्प्रति । स्वीयां जरामुपगतामवलोक्य राजा रामं च राज्यवहनक्षममाकलय्य । राज्याभिषेकपरमोत्सवमस्य कर्तुं व्यादि-

कैकेयी—( आत्मगतम् ) प्राप्तः किल मद्वाग्बन्ध-
कालस्तर्हि द्रुतं राजानं भरतराज्यं प्रार्थयामि
न खलु कालक्षेपः श्रेयसे। ( रहसि उपगम्य प्रका-
शम् ) राजन्नमङ्गलीरियं वधूर्यतोऽस्या आगम-
नमात्रेण महोत्पाताः संभवन्तीति।

तानुत्पातानवेक्ष्य क्षितिपमथ दशस्यन्दनं क्रन्दयन्ती
लोकाञ्छोकानलौघैः शिवशिव तरसा भस्मसात्कुर्वतीव।
कैकेयी वाचमूचे निखिलनिजकुलाङ्गारमूर्त्तिः ससीतः
शान्त्यै पुत्रस्य राज्यं भवतु वनमभिप्रेष्यतामेष रामः ३

दशरथः—( सकरुणस्त्रीवचनस्वीकरणं मरणोत्साहं च
नाटयन्महतीं मूर्च्छामासाद्य धरणीतलमुपगतः
कथमपि चेतनामुपलभ्य )

रामं कामाग्रजमिव वनं प्रस्थितं वीक्ष्य शक्तो
धर्तुं प्राणाञ्छिव शिव कथं तान् विहायाथवाहम्।

---

ष्टवान् पुरजनाः कुरुत प्रमोदम् ॥ रामाभिषेके पदविह्वलायाः कक्ष-च्युतो हेमघटस्तरुण्याः। सोपानमारुह्य चकार शब्दं ठंठं ठंठं ठं ठठंठं ठंठं ठः ॥ एतत्पद्यत्रयम्। " प्रलये रुद्रश्चीत्कारं करोति इति प्रसिद्धम्। स्फीतकेतुप्रचार इति वा पाठे स्पष्टार्थः। एकोत्तरशतं केतवः सन्ति ॥ २ ॥

तानिति ॥ दशस्यन्दनं दशरथं क्रन्दयन्ती शोषयन्ती शिव शि-वेति खेदे। एषः रामः शान्त्यै उत्पातजन्यदोषोपशमाय वनमभि-प्रेष्यतां पुत्रस्य मम सुतस्य भरतस्य राज्यं भवतु इति वाचमूचे ३

रामामिति ॥ अथवा प्राणधारणाक्षमश्चेत्तान्प्राणानपि विहाय अ-

ः स्यां वचनमनृतं तत्पुनर्नान्यथा मे
भूयाद्भूयस्तदनु वचनं हा बभाषे तथेति ॥ ४ ॥

( रामभरतौ स्वं स्वं कालमधिगम्य हर्षशोकौ नाटयन्तौ गुरोर्गिरा जटावल्कलच्छत्रचामरधारिणौ वनप्रस्थानराज्याभिषेकारम्भाय राजानं दशरथं नमस्कर्तुमवतरतः । )

तत्र भरतः—

हा तात मातरहह ज्वलितानलो मां
कामं दहत्वशनिशैलकृपाणबाणाः ।

---

नृतप्रतिनिर्मुक्तः स्यां तदेव वचनम् अन्यथा माभूत् । तदनु इति विचारानन्तरं हा कष्टं तथेति यथा त्वं वदसि तथैवास्तु इति तां कैकेयीं बभाषे । अत्र राज्ञेति चिन्तितं चेत्कैकेय्युक्तं करोमि तर्हि रामादर्शनेन मरणमाप्नुयां न चेदनृतं स्यात्तर्ह्यनृतं मा स्यात् मरणमेवास्तु इति भावः । अत्रेयं कथा । देवासुरयुद्धे देवपक्षे स्थितो राजा मूर्च्छितः तेनैव सहेयं तत्र गता कैकेयी रात्रावेनं भक्षयद्भ्यो राक्षसेभ्यो योगबलेनारक्षत् । तदा प्रबुद्धेन राज्ञा वरद्वयमस्यै दत्तं तत्तया राज्ञि विन्यस्तं यथेच्छं ग्रहीष्यामीति । तद्वरादानादनृतः स्यामिति प्रसिद्धम् ॥ ४ ॥

रामभरताविति ॥ अत्र प्रसिद्धशब्दार्थकथने रामायणविरोधः स्यात् अस्याप्यग्रिमश्लोकैश्च तत एवं व्याख्यायते । अत्र राज्ञोक्तं राज्यभ्रष्टो रामो वनं यातु अराज्यार्हो भरतो राज्यं गृह्णातु तदा भरतोऽपि राज्यं परित्यज्य रामानुगमनायोद्यतोऽभूदिति पठ्यते अन्यथा भरताधर्मः स्यात् । रामभरतौ राजानं नमस्कर्तुमवतरत् इत्यन्वयः। कीदृशौ स्वं स्वं समयं वनगमनराज्यग्रहणरूपमधिगम्यं हर्षशोकौ वनगमनात् रामो हर्षं राज्यश्रवणात् भरतः शोकं नाटयन्तौ । नाटकमेवाह । गुरोर्दशरथस्य गिरा जटाश्च वल्कलानि च तान्येव

मथ्नन्तु तान्विषहते भरतः सलीलं
हा रामचन्द्रपदयोर्न पुनर्वियोगम् ॥ ५ ॥
मां बाधते न हि तथा गहनेषु वासो
राज्यारुचिर्जनकबान्धववत्सलस्य ।
रामानुजस्य भरतस्य यथा प्रियायाः
पादारविन्दगमनक्षतिरुत्पलाक्ष्याः ॥ ६ ॥
श्रुत्वा सुमन्त्रवचनेन सुतप्रयाणं
शापस्य तस्य च विचिन्त्य विपाकवेलाम् ।
हा राघवेति सकृदुच्चरितं नृपेण
निःश्वस्य दीर्घतरमुच्छ्वसितं न भूयः ॥ ७ ॥

---

छत्रचामराणि च तद्धारिणौ कस्मै वनप्रस्थानमेव राज्याभिषेकः तस्मै एतदर्थेन नृपे सत्यत्वमायाति भरतेऽपि धार्मिकत्वं नृपेण रामे भरतेऽपि राज्यं प्रतिज्ञातम् एकतरादानेऽनृतमेव तस्मादुभाभ्यां वनमेव राज्यं मतं भरतो जटाधरः सन् रामाज्ञया राज्यं चकारेति कैकेय्यापि वरदानात् सत्यत्वमेव । तत्र भरतः अशनिर्वज्रं शैलाः गिरयः कृपाणः खड्गः बाणः शरः ते च तान् वज्रादीनिति सुगमम् ॥ ५ ॥

भरतस्य राज्यारुचिश्च राज्याकरणं कीदृशस्य भरतस्य जनके दशरथे बान्धवे मयि वत्सलस्य प्रेमवतः । यद्वा । जनको विदेहस्तद्बान्धवस्य तद्भ्रातुः प्रेष्ठस्य जामातृत्वात् ममानुजस्येति अन्यत्सुगमम् ॥ ६ ॥

श्रुत्वेति ॥ नृपेण दशरथेन सुमन्त्रो मन्त्री तद्वचनेन सुतानां रामलक्ष्मणभरतादीनां हा राघव राम राम इति एकवारमुच्चरिते सति दीर्घतरं निःश्वस्य भूयो नोच्छ्वसितं देहं त्यक्तुमिति भावः ॥ ७ ॥

मातस्तातः क्व यातः सुरपतिभुवनं हा कुतः पुत्रशोकात्
कोऽसौ पुत्रश्चतुर्णां त्वमवरजतया यस्य जातः किमस्य।
प्राप्तोऽसौ काननांतं किमिति नृपगिरा किं तथासौ बभाषे
मद्वाग्बद्धः फलं ते किमिह तव धराधीशता हा हतोस्मि८

गुरोर्गिरा राज्यमपास्य तूर्णं
वनं जगामाथ रघुप्रवीरः ।
निषङ्गपृष्ठः शरचापहस्त-
स्तं लक्ष्मणो गामिव बालवत्सः ॥ ९ ॥

गुर्वाज्ञापरिपालनाय च वनं संप्रस्थितं राघवं
दृष्ट्वासौ त्वरिता विदेहतनया श्वश्रूजनं पृच्छति ।
नत्वा कोसलकन्यकाङ्घ्रियुगलं पश्चात्सुमित्रां पुन-
र्दृष्ट्वा हा शुकसारिकापिककुलं रामानुगा प्रस्थिता १०॥

रामे प्राप्ते वनान्तं कथमपि भरतश्चेतनां प्राप्य तातं
नीत्वा देवेन्द्रलोकं मुनिजनवचनादूर्ध्वदेहक्रियाभिः ।

---

भरतः महतीं मूर्च्छामासाद्य वैक्लव्यं नाटयति—मातरिति ॥ उक्तिप्रत्युक्त्यात्रार्थोद्धाटनम् अन्यत्सुगमम् । इति पुनः मूर्च्छितो भुवि पपात ॥ ८ ॥

गुरोरिति ॥ शरयुक्तश्चापो हस्ते यस्य मध्यमपदलोपी समासः । अन्यार्थेऽथशब्दः स कः लक्ष्मणस्तं राघवम् अनुजगाम बालवत्सो गामिवेति ॥ ९ ॥

गुर्वाज्ञेति ॥ गुरोर्दशरथस्य अहमपि यास्यामीति पृच्छाति कोसलकन्या कौसल्या तदङ्घ्रियुगलम् । शुकं च सारिकां च पिककुलं च द्वन्द्वैक्यम् ॥ १० ॥

राम इति ॥ अयोध्यानिकट एव नन्दिग्रामोऽस्ति तत्रस्थः सन्

भ्रातुः शोकाज्जटावानजिनवृततनुः पालयामास नन्दि-
ग्रामे तिष्ठन्नयोध्यां रघुपतिपुनरागामिभोगाय वीरः ११॥

सद्यः पुरीपरिसरेषु शिरीषमृद्वी
गत्वा जवात्त्रिचतुराणि पदानि सीता।
गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम्॥ १२॥

रामः—

आदावेव कृशोदरी कुचतटीभारेण नम्रा पुन-
र्लीलाचङ्क्रमणं च नैव सहसे दोलाविधौ श्राम्यसि।
स्रोतःकाननगर्त्तनिर्झरसरित्प्रायानपूर्वानिमान्
भूभागानपि भूतभैरवमृगान्वैदेहि यायाः कथम्॥१३॥

ननु जटाजिनादिवतः किमयोध्यापालनेनेति तत्राह। रघुपतेः रामस्य वनवासानन्तरभोगाय अपालने रामवचनभङ्गात् त्वमत्रस्थो राज्यं कुर्विति रामवचनम्॥ ११॥

सद्य इति॥ "त्रिचतुर" इति निपातः। असकृद्वारं वारम् "पर्यन्तभूः परिसरः" इत्यमरः॥ १२॥

आदाविति॥ हे वैदेहि इमान् वनसंबन्धिनो भूभागान् भूप्रदेशान् त्वं कथं यायाः कथं गमिष्यसि। स्रोतांसि च काननानि च गर्ताश्च निर्झराश्च सरितश्च तेषां प्रायो बाहुल्यं येषु तान् अपूर्वान् त्वया कदाप्यदृष्टान्। यास्यामीति चेत्तत्राह। लीलायै यन्मन्दिरेऽपि चङ्क्रमणं तदपि त्वं न सहसे। दोलाविधौ अपि श्राम्यसि श्रममेषि। अत्र हेतुमाह आदाविति॥ १३॥

अरुणदलनलिन्या स्निग्धपादारविन्दा
कठिनतनुधरण्यां यात्यकस्मात्स्खलन्ती ।
अवनि तव सुतेयं पादविन्यासदेशे
त्यज निजकठिनत्वं जानकी यात्यरण्यम् ॥ १४॥

पथि पथि कवधूभिः सादरं पृच्छमाना
कुवलयदलनीलः कोऽयमार्ये तवेति ।
स्मितविकसितगण्डं व्रीडविभ्रान्तनेत्रं
मुखमवनमयन्ती स्पष्टमाचष्ट सीता ॥ १५ ॥

रामः वारितामपि कृतप्रयाणां सीतां दृष्ट्वा धरणीं प्रार्थयते—अरुणेति ॥ भो अवनि भूमे इयं सीता अकस्मान्मन्दं मन्दं यथा स्यात्तथा कठिना तनुर्यस्या एवंभूताया धरण्याः सकाशात् स्खलन्ती सती याति । कुत इत्यपेक्षायामाह । अरुणदला चेयं नलिनी च तद्वत् आसमन्तात् स्निग्धे पादारविन्दे यस्याः सा अतोऽस्याः पदविन्यासदेशे निजकठिनत्वं त्यज। कस्मात् त्यजामीति चेत्तत्राह। तव सुता एतेन वात्सल्यम् उदीरितम् । जानकी वनं याति। यद्वा। कीदृश्या धरण्याः अरुणदलनलिन्या अरुणा ये दलाः पादाङ्गुलयस्तेषां नलिनी दुःखदेत्यर्थः । " नलोऽस्त्री नालदुःखयोः " इति चरकः । नलं दुःखमस्या अस्तीति नलिनी मैथिली ॥ १४ ॥

पथिकवधूभिः पान्थस्त्रीभिः । यद्वा । पथि पथि मार्गे मार्गे कवधूभिः ग्रामीणस्त्रीभिः " कोऽस्त्री ग्राम्यप्रकाशयोः " इति धनञ्जयः । स्मितेन विकसितौ गण्डौ यस्मिन् व्रीडया विभ्रान्ते नेत्रे यस्मिन् तन्मुखमवनमयन्ती। एतेन स्पष्टं मद्रमणोऽयमित्युक्तवती न तु गिरेति ॥ १५ ॥

घुसृणमसृणपादा गम्यते भूः सदर्भा
विरचय शिवजातं मूर्ध्नि घर्मः कठोरः ।
इति ह जनकपुत्री लोचनैरश्रुगर्भैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ॥ १६ ॥

(तत्र चित्रकूटे जानकी सकरुणं सबाष्पम् ।)

मूर्ध्ना बद्धजटेन वल्कलभृता देहेन पादानतिं
कुर्वाणे भरते तथा प्ररुदितं तारस्वरैः सीतया ।
येनोद्विग्नविहङ्गनिर्गततरुर्निःसंमदश्वापदः
शैलेन्द्रोऽपि किलैष भूरिभिरभूत्साश्रुः पयःप्रस्रवैः १७

रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ।
अयोध्यामटवीं विद्धि गच्छ पुत्र यथासुखम् ॥ १८ ॥

---

घुसृणेति ॥ पथि मार्गे पथिकवधूभिः अश्रुगर्भैर्लोचनैः कृत्वा जानकी वीक्षिता इति शिक्षिता च इति किं भो सीते त्वं घुसृणमसृणपादा कमलकोशनवनीततुल्याऽरुणकोमलचरणाऽसि । भूः सदर्भा दर्भाङ्कुरसहिता भवत्या गम्यते मूर्ध्नि घर्मः कठोरः अतः शिवजातं शिरःपादत्राणं वल्कलजं पत्रजं वा विरचय ॥ १६ ॥

मूर्ध्नेति ॥ पयःप्रस्रवैः निर्झररूपैः एषः शैलेन्द्रश्चित्रकूटोऽपि साश्रुरभूत् केन येन रुदितेन । कीदृशः शैलेन्द्रः उद्विग्नाः ये पक्षिणः तैः निर्गताः परित्यक्तास्तरवो यस्मिन् निःसंमदाः हर्षरहिताः श्वापदाः मृगादयो यस्मिन् सः । " प्रमोदामोदसंमदाः " इत्यमरः ॥ १७ ॥

तत्रैव सुमित्रा लक्ष्मणं प्रति—राममिति ॥ यथासुखमिति रामस्य यथा सुखं स्यात्तथैव गच्छाऽनुसरेत्यर्थः ॥ १८ ॥

पदकमलरजोभिर्मुक्तपाषाणदेह-
मलभत यदहल्यां गौतमो धर्मपत्नीम् ।
त्वयि चरति विशीर्णग्रावविन्ध्याद्रिपादे
कति कति भवितारस्तापसा दारवन्तः ॥ १९ ॥
उपलतनुरहल्या गौतमस्यैव शापा-
दियमपि मुनिपत्नी शापिता कापि वा स्यात् ।
चरणनलिनसङ्गानुग्रहं ते भजन्ती
भवतु चिरमियं नः श्रीमती पोतपुत्री ॥ २० ॥

---

पदेति ॥ अथ भरते विवृत्ते रामेऽप्यन्यतः कृतप्रयाणे आह स्म। जानकी रामं प्रति विशीर्णाः सर्वतः प्रक्षिप्ताः ग्रावाणो यस्मिन् स चासौ विन्ध्याद्रिपादश्च तस्मिन् त्वयि चरति सति कति कति तापसा दारवन्तः भवितार इति । एतत्कुत इत्यपेक्षायामाह । यतः गौतमः शापाच्छिलारूपाम् अहल्यां तव पदकमलरजोभिर्मुक्तः त्यक्तः पाषाणदेहो यया तामलभत इत्युक्तं भवति । त्वच्चरणस्पर्शेन यथा पूर्वमहल्या पाषाणरूपापि देवीत्वं गता तथाद्यापि विन्ध्यग्रावाणः स्त्रियो भविष्यन्तीति पूर्ववृत्तमनुस्मृत्योक्तम् ॥ १९ ॥

वैदेहीति वैदेही अदृष्टराजमन्दिराद्बहिर्व्यवहारतया बालभावाच्च दैवयोगात् नौकासुखमनुभूय वने चरन्ती स्थलेऽपि भाराक्रान्ता सती नौः प्रचरतीति मन्यमानास्माभिरतः परमनयैव सुखप्रयाणं कर्तव्यं न पद्भ्यामिति बुद्ध्या राममधिकृत्याब्रवीत् । वने जले स्थले भूमौ उपलेति यदीत्यर्थे वाशब्दः ।इयमपि पोतपुत्री नौका चेत् केनापि शापिता कापि मुनिपत्नी स्यात् तर्हि नोऽस्माकमेव श्रीमती भवतु सुखकारिणी स्यात् । मुनिपत्नी मा भूदिति भावः । केव गौतमस्य शापात् उपलतनुः पाषाणदेहापि ते चरणनलिनसङ्गानुग्रहं भजन्ती सती अहल्यैव यथा शिलात्वम् अहल्यात्वं याता तथेयं नौका-

दृष्ट्वातिदैन्यं जनकात्मजाया-
स्तत्रैव रामः सह लक्ष्मणेन ।
गोदावरीतीरसमाश्रितेषु
वनेषु चक्रे निजपर्णशालाम् ॥ २१ ॥

एषा मञ्चवटी रघूत्तमकुटी यत्रास्ति पञ्चावटी
पान्थस्यैकघटी पुरस्कृततटी संश्लेषभित्तौ वटी ।

पि मुनिस्त्रीत्वमायातु अस्मदारोहणसुखाभावात् इत्युक्तवत्या सीतायाम् ॥ २० ॥

॥ वनेषु दण्डकसंज्ञकेषु ॥ २१ ॥

लक्ष्मणस्तत्रैव तत्कुटीरमणीयतामालोक्य–एषेति ॥ हे रघूत्तम एषा पञ्चवटी कुटी भवत्विति शेषः । कीदृशी पञ्चवटी पञ्चवटयुक्ता एतेनापि निबिडच्छायात्वमुक्तम् । पुनः कीदृशी यत्र पञ्चावटी अस्ति पञ्चानामवटानां समाहारः पञ्चावटी पञ्चवटवृक्षमूलेषु पञ्च सरस्वतीगर्ताः । " गर्तावटौ भुवि श्वभ्रे " इत्यमरः । पुनः कीदृशी पान्थस्य प्रवासिनः एकमपेक्षितुं जलच्छायादिकं घटयते उद्दीपयतीति । पुनः कीदृशी पुरस्कृतौ शोभमानौ तटौ कुटयपेक्षया द्वारभागौ यस्याः सा । पुनः कीदृशी संश्लेषो दारापत्याभिनिवेशस्तस्य भित्तौ सञ्चये वटी तन्निवर्त्तकौषधवटिका । पुनः कीदृशी यत्र यत्समीपे गोदा गोदावरी नटी नर्तकीरूपा । कीदृशी गोदा तरङ्गितौ तटौ यस्याः सा । पुनः कीदृशी गोदाकल्लोलैश्चञ्चन्तः पुटाः जलनिर्गममार्गा यस्यां सा कल्लोलचञ्चत्पुटी । पुनः कीदृशी गोदा अलौकिको यः पद्मामोदस्तस्य कुटी कूपिका । पुनः कीदृशी भवाब्धिशकटी पोतरूपा । पुनः कीदृशी गोदा भूतक्रियादुष्कुटी भूतानां क्रियाभिः सामान्यधर्मैः दुष्प्रापा बहुपुण्यलभ्येत्यर्थः । अत्र विशेषणेषु वटीनटीकुटीसादृश्यं चिन्त्यं विस्तारभयान्न विवृतम् ।

गोदा यत्र नटी तरङ्गिततटी कल्लोलचञ्चत्पुटी
दिव्यामोदकुटी भवाब्धिशकटी भूतक्रियादुष्कटी २२
क्रीडाकल्पवटं विसर्पितजटं विश्वाम्बुजन्मावटं
पिष्टाण्डौघघटं धृताङ्घ्रिशकटं ध्वस्तक्षमासंकटम् ।

---

अत्र भवाब्धिशब्दबलादन्योऽप्यर्थः संभवति। हे रघूत्तम एषा कुटी भवतु। कीदृशी पञ्चानां पृथिव्यप्तेजोवाय्वाकाशादीनां वटी निहन्त्री। "वट विशातने" यां प्राप्य न पुनर्भव इति। यत्र यस्यां पञ्चानां रूपरसगन्धस्पर्शशब्दानाम् अवटी सङ्गतानिवर्त्तको विधिरस्ति। "वट वर्जने" अत्रेन्द्रियाणि सुजयानीति पान्थस्य मोक्षमार्गकृतप्रयाणस्य एका निरुपमा घटी विश्रामस्थानम् "घट विश्रमणे"। यत्र यस्यां गोदा गावो वेदवाचः ताः ददातीति गोदा मुनिसभा नटी प्रसिद्धाऽऽस्ते। "नट आविर्भावे"। कीदृशी गोदा पुरस्कृता तटी समित्कुशसमृद्धिर्यया सा। "तटच् समृद्धौ"। पुनः कीदृशी संश्लेषो दारापत्याद्यभिनिवेशस्तस्य भित्तौ संचये वटी वज्ररूपा। "वज्रं वटी पविः सारः" इति शाश्वतः। पुनः कीदृशी रागादिषु प्राप्ता ये जीवाः तेषां तटिनी निःसारणतीर्थवती। पुनः कीदृशी कल्लोलैः देवैरितस्ततः चङ्क्रम्यमाणानि निकुञ्जानि यस्याः सा। "कल्लोले देववारिणोः" इति धरणिः। "निकुञ्जपुटयोः पुटः" इति विश्वः। पुनः कीदृशी दिव्यो नैसर्गिको य आमोदः वासना तस्य कुटी क्षयकरी। "निवासक्षययोः कुटी" इति चरकः। अत एव भवाब्धिशकटी संसारतारणनौका। नन्वेवं चेत्सर्वे कथं न विद्युरिति चेत्तत्राह। भूतानां प्राणिनां क्रियाभिर्दूरदृष्टैः दुष्कटी दुष्प्रापेत्यर्थः। एते धातवो कविकल्पद्रुमे चिन्त्यास्तद्रूपं च ॥ २२ ॥

जानकी संन्यस्ताध्वपरिश्रमा मुग्धावतारं पुराणपुरुषं वन्दते स्म। तत्रैव कुटीकरणाज्जातानन्दा प्रणमति। अहं रामं वन्दे इत्यन्वयः।

विद्युच्चारुरुचा विधूतकपटं सीताधरालम्पटं
भिन्नारीभघटं विरुग्णशकटं वन्दे गिरां दुर्घटम्॥२३॥

कीदृशं क्रीडानां नरसुरतिर्यगाद्यवताराणां कल्पवटम् अवताराः यतः शक्तिमास्थाय क्रीडन्ति यथेच्छम् । ननु प्रतियुगावतारे जीवो न किं नेत्याह । विसर्पितवटं प्रकटीकृतविश्वतनुम् । ननु विश्वजनकत्वेन तत्कृतदोषवान् किं नेत्याह। विश्वाम्बुजन्मावटं विश्वमेवाम्बुजन्म कमलं तत्प्रकाशाय आ समन्ततः वटः सूर्यः यथा सूर्यः पद्मं बोधयति नतु तद्गन्धादि गृह्णाति तथेश्वरोपीक्षयैव करोति नतु तद्दोषभाक् । " वटः सूर्ये तरौ लोके " इति शाश्वतः । सूर्यवन्नाशवान् किं नेत्याह। पिष्टाण्डौघघटं चूर्णीकृतब्रह्माण्डसमूहं स्वयमेव नाशकृदित्यर्थः। तर्हि सर्वानेव नाशयति किन्नेत्याह । धृताङ्घ्रिशकटं धृतौ हृदये स्वाङ्घ्री यैस्ते धृताङ्घ्रयो भक्ताः तेषां संसारोत्तारणाय वाह्यं पोतमिति । एतदेव दर्शयति ध्वस्तं दूरीकृतं क्षमायुक्तानाम् अम्बरीषादीनां संकटं येन तम् । मध्यमपदलोपी समासः । तर्हि भक्तपालकत्वाद्विषमः किं नेत्याह। विद्युदिव चारु रुक् यस्याङ्गदीप्तिस्तया विधूतः कपटो मायाकृतदम्भो येन तम् अतो यः कोऽपि तद्रूपं स्मरति तस्य दम्भक्षतिः नेतरेषाम् । अतो ज्ञानाज्ञानाभ्यां जीवानामेव विषमत्वं नतु तवेति भावः। ननु एतादृक् कथं प्राप्यते तत्राह। सीताधरालम्पटं भक्तार्थमाविर्भूतमित्यर्थः । ननु तर्हि कामी किं नेत्याह । भिन्ना अरयः कामादयः एव इभाः मतङ्गजास्तेषां घटाः समूहा येन तम्। ननु जितकामादित्वादिरहितैर्हिकारिपुः किन्नेत्याह। विरुग्णशकटं विशेषेण रुग्णाः खण्डीकृताः शकटाः दैत्यराजानो येन ।"शंकौ यवनराक्षसौ" इति धरणिः। "टो महेश्वर आख्यातः" इत्येकाक्षरः । नन्वेवं मां सर्वे किं न विद्युरिति चेन्न । गिरां दुर्घटं वाचामगोचरमनिर्वचनीयमित्यर्थः ॥ २३ ॥

अथ मारीचः–( अतीतानागतवर्त्तमानत्रिकालदर्शनो लङ्कापतेराज्ञामासाद्य चिन्तयामास । )

रामादपि च मर्त्तव्यं मर्त्तव्यं रावणादपि ।
उभयोर्यदि मर्त्तव्यं वरं रामो न रावणः ॥ २४ ॥

सुललितफलमूलैस्तत्र कालं कियन्तं
दशरथकुलदीपे सीतया लक्ष्मणेन ।
गमयति दशकण्ठोत्कण्ठितप्रेरितं द्राक्
कनकमयकुरङ्गं जानकी संददर्श ॥ २५ ॥

देहं हेममयं हरिन्मणिमयं शृङ्गद्वयं वैद्रुमा-
श्चत्वारोऽपि खुरा रदच्छदयुगं माणिक्यकान्तिद्युति ।
नेत्रे नीलसुतारके सुवितते तद्वच्चलं प्रेक्षितं
तत्तद्रत्नमयं किमत्र बहुना सर्वाङ्गरम्यो मृगः ॥ २६ ॥

साङ्गं मायाकुरङ्गं द्रुतनिधननिशाचारिमारीचमग्रे
धावन्तं संचरन्तं क्षणमपि गहने जानकी याचते स्म ।

---

रामादिति ॥ वरं रामो न रावणः इत्यस्यायमर्थः । रामात् मरणे परत्र मोक्षः स्यादिह च स्वामिकार्यमित्यर्थद्वयमिति ॥ २४ ॥

सुललितेति ॥ इति विचार्य मृगो भूत्वा तत्पर्णशालाभ्यर्णं गतः। दशरथकुलदीपे समे सीतया लक्ष्मणेन च सह तत्र कालं गमयति सति जानकी कनकमयकुरङ्गं संददर्श । कीदृशं दशकण्ठस्य उत्कण्ठितेन उत्कण्ठया सीताहरणाभिलाषेण प्रेरितं प्रस्थापितमिति॥२५॥

देहमिति ॥ सुगमम् ॥ २६ ॥

साङ्गमिति ॥ जानकी तं मायामृगं प्रति रामं याचते स्म प्रार्थयामासेत्यर्थः । कीदृशं द्रुतम् अचिरभावि निधनं यस्य द्रुतनिध-

रामं कामाभिरामं निशितशरधनुर्धारिणं लक्ष्मणेन
क्षिप्रं तद्रक्षणायोल्लिखिततटभुवा सोप्यगात्तद्वधाय२७
इति हनुमन्नाटके तृतीयोऽङ्कः ॥ ३ ॥

## अथ चतुर्थोऽङ्कः ।

आन्दोलयन्विशिखमेककरेण सार्द्धं
कोदण्डकाण्डमपरेण करेण धुन्वन् ।
सन्नह्य पुष्पलतया पटलं जटानां
रामो मृगं मृगयते वनवीथिकासु ॥ १ ॥
हस्ताभ्यां समुपैति लेढि च तृणं न स्पृश्यतां गाहते
गुल्मान् प्राप्य निवर्त्तते किसलयानाघ्राय चाघ्राय च ।

नश्चासौ निशाचरश्च स चासौ मारीचश्च तम् अग्रे धावन्तम् अतिगहनेक्षणं यथा स्यात्तथा सञ्चरन्तम् । सोऽपि रामः लक्ष्मणेन सह तद्वधाय क्षिप्रमगात् लक्ष्मणेनानुगत इत्यध्याहारो वा । कीदृशेन तद्रक्षणाय सीतासंरक्षणार्थं लिखिता धनुष्कोट्या तटौ द्वारोपान्तभागौ यस्याः सा भूः कुटी येन रामधनुर्लेखां कोऽपि नाक्रमिष्यतीति ॥ २७ ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकायाम् औत्पातिको नाम तृतीयोऽङ्कः॥३॥

आन्दोलयन्निति ॥ एककरणं सार्द्धं विशिखमान्दोलयन्निति मृगयते अवलोकयति ॥ १ ॥

हस्ताभ्यामिति ॥ मायामृगः प्रान्तेषु प्रचलति प्रान्तेषु शालाभ्याशेषु मायापूर्वकं मृगजात्यनुकरणमाह । कदाचिदिति पदाध्या-

भूयस्त्रस्यति पश्यति प्रतिदिशं कण्डूयते स्वां तनुं
दूरं धावति तिष्ठति प्रचलति प्रान्तेषु मायामृगः ॥२॥
ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्पन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ३

बाणेन दिव्येन रघुप्रवीर-
स्ततो मृगं वक्षसि बद्धलक्ष्यः ।
विव्याध यावत्तरसा तपस्वी
दशाननस्तावदिहाजगाम ॥ ४ ॥

---

हारः सर्वत्रानुबध्यते । हस्ताभ्याशं हस्तग्राह्यत्वं लेढि । " लिह आस्वादने " नस्पृश्यताम् अस्पृश्यत्वम् । शेषं सुगमम् ॥ २ ॥

रामो मृगं लक्ष्मणं दर्शयति—ग्रीवेति ॥ ग्रीवाभङ्गेन अभिरामं यथा स्यात्तथा मुहुरनुपतति पश्चादवलोकयति । स्पन्दने महच्चलने बद्धा दृष्टिर्येन सः भूयसा पश्चार्द्धेन पश्चिमशरीरभागेन मदीयशरपातभयात् पूर्वकायं प्रविष्टः पश्चात्संकुचितगात्र इति । अर्द्धभक्षितैः दर्भैः कीर्णं विक्षिप्तं वर्त्म येन सः । कीदृशैः दर्भैः श्रमेण विवृतमत्युद्घाटितं यन्मुखं ततो भ्रंशिभिः पातुकैः । एनं पश्य. उदग्रप्लुतत्वात् उत्कटोत्पतनात् वियत्याकाशे बहुतरं प्रयाति गच्छति भूमौ स्तोकमल्पं प्रयाति ॥ ३ ॥

ततो वनान्तरे—बाणेनेति ॥ यावत् रघुवीरो बाणेन मृगं विव्याध तावदेव तपस्विवेषधारी दशाननः इह सीतासमीपे आजगामेत्यन्वयः ॥ ४ ॥

मारीचमृगयाव्यग्रे रामे प्राप्ते च रावणे ।
भयादिव कुरङ्गीणामस्याः पश्यामि लोचने ॥ ५ ॥

स व्याहरद्धर्मिणि देहि भिक्षा-
मलङ्घयँल्लक्ष्मणलक्ष्मलेखाम् ।
जग्राह तां पाणितले क्षिपन्ती-
माकारयन्तीं रघुराजपुत्रौ ॥ ६ ॥

रे रे भो परदारचोर किमरेऽधीरं त्वया गम्यते
तिष्ठाधिष्ठितचन्दनाचलतटः प्राप्तो जटायुः स्वयम् ।
मुञ्चैनां पतिदेवतां न खलु चेन्मच्चण्डतुण्डाङ्कुश-
क्रूरावस्करणव्रणासृग्रसः पास्यन्ति गृध्रास्तव ॥ ७ ॥

---

मारीचेति ॥ रामे मारीचमृगयाव्यग्रे सति रावणे प्राप्ते सति अस्याः सीतायाः लोचने भयात्कुरङ्गीणामिव पश्यामि । किमप्यनिर्वचनीयनेत्रलौल्यं दृष्ट्वा ननन्देति भावः ॥ ५ ॥

स इति ॥ रावणो व्याहरदित्युवाच । किं तदाह । हे धर्मिणि आतिथ्यदानादानपुण्यपापज्ञे भिक्षां देहि । लक्ष्मणेन कृता या लक्ष्मणः चिह्नस्य लेखा ताम् अलङ्घयन् सन् तद्बहिरागत्य पाणितले क्षिपन्तीं भिक्षां ददतीं सीतां जग्राह हृतवान् । कीदृशीं रघुराजो दशरथस्तत्पुत्रौ रामलक्ष्मणौ आकारयन्तीम् आह्वयन्तीम् ॥ ६ ॥

जटायुर्दशरथमैत्रीमनुस्मरन् रावणं ज्ञात्वा कथयति—रे रे इति ॥ रे रे इति नीचसंबोधने । भो अहो परदारचोर त्वया अधीरं तूर्णं यथा स्यात्तथा किं गम्यते । धीरास्तु शनैर्गच्छन्ति न त्वरया । अरे तिष्ठ स्वयमहं जटायुः प्राप्तोऽस्मि । अधिष्ठितः अधिवासितः चन्दनाचलस्य मलयस्य तटो येन एतेन प्राशस्त्यमुक्तम् । एनां मुञ्च । ननु इयमेव प्रयातीति चेन्न । कीदृशी पतिरेव देवता यस्याः सा

जन्म ब्रह्मकुले हरार्चनविधौ कृत्वा शिरःकृन्तनं
शक्तिर्वज्रिणि घोरदण्डदलनव्यापारशक्तं मनः ।
हेलोल्लासितकेलिकन्दुकनिभः कैलास उत्पाटित-
स्तत्किं रावण लज्जसे न हरसे चौर्येण पत्नीं रघोः ॥८॥
मैनाकः किमयं रुणद्धि पुरतो मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि ।

---

तां चेन्न त्यजसि तर्हि तव उरसः सकाशात् गृध्राः मदीयं यच्चण्डं तुण्डं तदेवाङ्कुशस्तेन यत्क्रूरम् अवस्करणं ततो ये व्रणास्तेभ्यो निसृतमसृक् रुधिरं पास्यन्ति। यद्वा । एकमेव पदं व्रणेभ्यो निसृतमसृक् यस्मिन् तदुरसः उरः पास्यन्ति । कर्मणि षष्ठी । "तदवस्करणं प्रोक्तं तुण्डेनोद्भिद्य कर्षणम् ।" इति हलायुधः ॥ ७ ॥

रावणं ज्ञात्वा अबलाशौर्याकुलवान् चौर्यं करोषि तत्तु त्वयि न संभवतीत्याह—जन्म ब्रह्मकुले इति ॥ हरार्चनविधौ शिरःकृन्तनं कृत्वा वज्रिणि देवेशे शक्तिः । मनः घोरदण्डदलनव्यापारशक्तं ये घोरदण्डा दुर्निग्रहास्तेषां निग्रहव्यापारे शक्तं समर्थम् । भवता कैलासो गिरिरुत्पाटितः । कीदृशः हेलयाऽनायासेन उल्लासितः उद्भ्रमितो यः केलये क्रीडार्थं कन्दुकस्तत्सदृशः यथैव केलिकन्दुकः तथैव गिरिरिति भावः । तत्तस्मादेवं बले सति चौर्येण यत् रघोः रामस्य पत्नीं हरसे तत्किं कस्मान्न लज्जसे गूढाक्षेपः ॥ ८ ॥

रावणः सक्रोधं स्वगतं च । अयं मैनाको गिरिः किं किं वितर्के। अयं कः पुरतो भूत्वा अव्याहतं देवैरप्यखण्डितं मदीयं मार्गं रुणद्धि सपक्षत्वात् तस्य मैनाकस्य शक्तिर्मन्मार्गरोधनसामर्थ्यं कुतः । यतः स गिरिः महेन्द्रादपि इन्द्रसकाशादपि यद्वज्रपतनं तस्माद्भीतः इन्द्र एव मत्तो बिभेति तन्निर्जितस्य गिरेर्मयि का शक्तिरिति भावः। तर्ह्ययं तार्क्ष्योऽस्ति न सोऽपि गरुडः । निजेन विभुना समं

ताक्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
हा ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति॥९॥
मा भैषीः पुत्रि सीते व्रजति मम पुरो नैष दूरं दुरात्मा
रे रे रक्षः क दारान् रघुकुलतिलकस्यापहृत्य प्रयासि।
चञ्च्वाक्षेपप्रहारत्रुटितधमनिभिर्दिक्षु विक्षिप्यमाणै रा-
शापालोपहारं दशभिरपि भृशं त्वच्छिरोभिः करोमि१०
अक्षं विक्षिपति ध्वजं दलयते मृद्नाति नद्धं युगं
चक्रं चूर्णयति क्षिणोति तुरगान् रक्षःपतेः पक्षिराट्।
रुन्धन् गर्जति तर्जयत्यभिभवत्यालम्बते ताडय-
त्याकर्षत्यवलुम्पति प्रचलति न्यञ्चत्युदञ्चत्यपि ॥११॥

---

विष्णुबलतुल्यबलं मां रावणं जानाति । रावयति स्वबलेन लोका-निति रावणः । हेति कष्टम् । ज्ञातम् एषः स जटायुः । सः कः यः जरसा वार्धक्येन व्याप्तः सन् वधं वाञ्छति । हा कष्टं वृद्धस्य हनने किं यश इति कष्टम् । विजयोऽयमलंकारः। तदुक्तं दण्डिना । " यः पूर्वोत्तरपक्षाभ्यां निर्णेता भवति स्वयम् । शब्दचातुर्यतो विज्ञैर्विजयः समुदीरितः ॥ " ॥ ९ ॥

जटायुः क्रोधमभिनीय । मा भैषीः भयं मा कार्षीः । दारशब्दो भूम्न्येव । दशभिस्त्वच्छिरोभिर्दशानामाशापालानामुपहारं करोमि करिष्यामीत्यर्थः । कीदृशैः शिरोभिः दिक्षु दशसु दिशासु विक्षिप्य-माणैः पुनः कीदृशैः चञ्च्वोः आक्षेपेण ये प्रहारास्तैस्त्रुटिताः धमन्यो नाड्यो येषां तैः । " नाडी तु धमनिः शिरा " इति विश्वः । अन्यत्सुगमम् ॥ १० ॥

अक्षमिति ॥ पक्षिराट् जटायुः रक्षःपतेः रावणस्य अक्षं चक्रान्त-रालं काष्ठं विक्षिपति विरुद्धं चालयति । दलयते त्रोटयति । मृद्ना-

क्रुद्धस्ततो दृढचपेटशिलातलेन
रक्षः पिपेष गहनेद्भुतपक्षिराजम् ।
ईषत्स्थितासुरपतद्भुवि राम राम
रामेति मन्त्रमनिशं निगदन्मुमुक्षुः ॥ १२ ॥

न मैत्री निर्व्यूढा दशरथनृपे राज्यविषया
न वैदेही त्राता हठहरणतो राक्षसपतेः ।
न रामस्यास्येन्दुर्नयनविषयोऽभूत्सुकृतिनो
जटायोर्जन्मेदं वितथमभवद्भाग्यरहितम् ॥ १३ ॥

हा राम हा रमण हा जगदेकवीर
हा नाथ हा रघुपते किमुपेक्षसे
इत्थं विदेहतनयां मुहुरालपन्ती-
मादाय राक्षसपतिर्नभसा जगाम ॥ १४ ॥

---

ति मर्दयति। गर्जति स्वयं तर्जयति। तमभिवति तिरस्करोति । आलम्बते मार्गमवलम्ब्य तिष्ठति। ताडयति तं प्रहरति। आकर्षति तत्केशान् विलिखति । अवलुम्पति तद्धासांस्यपहरति। प्रचलति स्वपक्षलाघवमाविष्करोति । न्यञ्चति शिरस्तत्प्रहारपातेन स्वयं नम्रीभवति । उदञ्चति स्वचरणकृततत्प्रहारवञ्चनाय उच्चैर्गच्छति ॥ ११ ॥

रावणः क्रोधं नाटयति-क्रुद्ध इति ॥ करतलप्रहारः स एव शिलातलस्तेन ॥ १२ ॥

जटायुः आत्मानं शोचयन्नाह । राज्यं विषयो यस्याः त्वद्राज्यं पालयामीति मैत्री न निर्व्यूढा न निष्पन्ना । सुकृतिनो रामस्य यतः किमपि कृतं न जातम् । अत एव भाग्यरहितमिति संतापमकरोदिति ॥ १३ ॥

हा रामेति ॥ उपेक्षसे उपेक्षां करोषि ॥ १४ ॥

आकृष्यमाणाऽऽभरणानि मुक्त्वा
सैरध्वजी मारुतिमद्रिमौलौ ।
उवाच रामाय सलक्ष्मणाय
वराय देयानि सदेवराय ॥ १५ ॥

( रामः शुष्के स्थाणौ दक्षिणे रटन्तं करटमवलोक्य पुनरागच्छन्निजप्राणप्रयाणमेव मन्वानः क्षणं विश्रम्य । )

मायाकुरङ्गं विनिहत्य रामो
भ्रात्रा सहागत्य च पर्णशालाम् ।
कोणत्रयेषु प्रसमीक्ष्य सीतां
दृष्टश्चतुर्थो न च शोकभीत्या ॥ १६ ॥

इति श्रीहनुमन्नाटके चतुर्थोऽङ्कः ॥ ४ ॥

आकृष्येति ॥ आकृष्यमाणा सैरध्वजी सीरध्वजो जनकस्तदपत्यं स्त्री सैरध्वजी सीता अद्रिमौलौ गिरिशिखरे स्वाभरणानि मुक्त्वा उन्मुच्य मारुतिं हनुमन्तमुवाच । किमुवाचेत्याह । वराय श्रेष्ठाय रामाय देवराय पतिभ्रात्रे लक्ष्मणाय चाभरणानि देयानि ॥ १५ ॥

रामेति ॥ दक्षिणभागे शुष्के स्थाणौ नीरसवृक्षखण्डे करटम् अवलोक्य पुनरागच्छन् मारीचं हत्वा पर्णशालां प्रत्यागच्छन् सन् "काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः।" इत्यमरः । कोणत्रयेषु सीतां प्रसमीक्ष्य चतुर्थः शालकोणस्तेन रामेण न दृष्टः । कया तदलाभातिशोकभीत्या इत्यर्थः ॥ १६ ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकाटीकायां सीताहरणं नाम चतुर्थोऽङ्कः ॥ ४ ॥

# अथ पञ्चमोऽङ्कः ।

(रामः प्राणोत्क्रमणसमयादपि घोरतरं वियोगसमयमधिगम्य पर्णशालान्तरालमालोक्य कथमपि विदीर्णहृदयमार्गादुज्जिगमिषून् प्राणान् धारयन् तदुत्तरीयमुपलभ्य जानकीं स्मरन्नरोदीत् । )

द्यूते पणः प्रणयकेलिषु कण्ठपाशः
क्रीडापरिश्रमहरं व्यजनं रतान्ते ।
शय्या निशीथसमये जनकात्मजायाः
प्राप्तं मया विधिवशादिदमुत्तरीयम् ॥ १ ॥

बहिरपि न पदानां पङ्क्तिरन्तर्न काचि-
त्किमिदमियमसीता पर्णशाला किमन्या ।
अहमपि किल नायं सर्वथा राघवश्चेत्
क्षणमपि न हि सोढा हन्त सीतावियोगम् ॥ २ ॥

---

ततो रामस्य किं वृत्तमासीत्तदाह—द्यूते इति ॥ विधिवशाद्वियोगाज्जनकात्मजाया इदमुत्तरीयं मया प्राप्तम् । किं तत् यत्तदोर्नित्ययोगात् यत् द्यूते पण इत्यादि सर्वं सुगमम् ॥ १ ॥

तच्चरणाचिह्नमविलक्ष्य विचिकित्सति—बहिरिति ॥ बहिरपि पर्णशालाबहिर्भागेऽपि काचित् स्त्रियाः पुरुषस्य वा पदानां पङ्क्ति अन्तः कुटिमध्येऽपि न तदिदं किमिति विचिकित्सा इयं याऽत्रस्था सा असीतैव न पर्णशालैवान्या किं किल। सर्वथा अयमहं राघव एव न चेत्स्यात्तर्हि क्षणमपि सीतावियोगं न सोढा । एतेनोन्मादो दर्शितः। तदुक्तं रसोदधौ। "प्रौढानन्दायत्तो विरहाद्यो हृद्भ्रमः स उन्मादः ।" इति ॥ २ ॥

मध्योऽयं हरिभिः स्मितं हिमरुचा नेत्रे कुरङ्गीगणैः
कान्तिश्चम्पककुड्मलैः कलरवो हा हा हृतः कोकिलैः ।
मातङ्गैर्गमनं कथं कथमहो हंसैर्विभज्याधुना
कान्तारे सकलैर्विनाश्य पशुवन्नीतासि भो मैथिलि॥३॥

युक्तमेव हि कैकेय्या यदहं प्रेषितो वनम् ।
ईदृशी यस्य मे बुद्धिर्मृगः क्वापि हिरण्मयः ॥ ४ ॥

आलिङ्गितात्र सरसीरुहकोरकाक्षी
पीताधरेति मधुरे विधुमण्डलास्या ।
रङ्गावतारमकरन्दविमर्दितानि
पुष्पाण्यमूनि दयिते क्व गतेत्यरोदीत् ॥ ५ ॥

---

मध्योऽयमिति ॥ भो मैथिलि ज्ञातं कुत्रापि त्वदीयं चिह्नमपि न लक्ष्यते अतः कान्तारे च अधुना मद्विनाभूतावसरे सकलैरेतैर्विनाश्य हत्वा नीतासि । गृहीतासि पशुवत् । यथा पशुर्विनाश्य गृह्यते तद्वत्। येनाङ्गेन येषामवमानः तत्तदङ्गं तैरेव गृहीतमित्याह । मातङ्गैः गजैर्हंसैश्च गमनमेव कथं कथं विभक्तामिति। अहो एतदाश्चर्यम्। उभयैरेकं कथं गृहीतामिति एतेन गुणकीर्त्तनावस्था दर्शिता। सोक्ता रसोदधौ।“ वैरहकान्ताविषये प्रशंसनं स्याद्गुणाख्यानम्।”इति॥३॥

युक्तेति ॥ आत्मानं शोचन्नाह । ईदृशी असंबद्धा। असंबद्धत्वमाह । हिरण्मयो मृगः क्वापि दृष्टः श्रुतो वास्ते न क्वापीत्यर्थः॥ ४॥

प्रकीर्णपुष्पमालां पर्णशालामालोक्याह—आलिङ्गितेति ॥ राम इति अरोदीत्। इति किं हे दयिते त्वं क्व गता अत्र त्वम् आलिङ्गिता मयेति शेषः। आलिङ्गनसुखेन नेत्रसंकोचात्कोरकत्वमुक्तम् । “कलिका कोरकः पुमान् ” इत्यमरः । अतिमधुरत्वे हेतुः विधुमण्डलसदृशास्या रङ्गानां केलीनामवतार आविर्भावस्तत्र यो मकरन्दः कोमलरसः तेन मिश्रितानीत्यर्थः ॥ ५ ॥

गाहं गाहं गह्वरकान्तारवनान्तान्
दर्शं दर्शं दर्पकभल्लीरिव वल्लीः ।
स्मारंस्मारं दूरगतां तामथ कान्तां
रामः कान्तामद्रिचरो दीनमरोदीत् ॥ ६ ॥

जे
भौ :।

योषिद्वियोगानलदह्यमानं
स्वकान्तमालिङ्गयतीव भूमिः ॥ ७ ॥

सीतेति हा जनकवंशजवैजयन्ति
हा मद्विलोचनचकोरनवेन्दुलेखे ।
इत्थं स्फुटं बहु विलप्य विलप्य राम-
स्तामेव पर्णवसतिं परितश्चचार ॥ ८ ॥

हा जानकि प्रचलितोत्पलपद्मनेत्रे
हा मे मनःकमलकाननराजहंसि ।
एष प्रिये तव वियोगजवह्निदग्धो
दीनं प्रयामि भवतीं क्व विलोकयामि ॥ ९ ॥

---

गह्वराणि सघनानि कान्ताराणि दुर्गवर्त्मानि येषु तानि गाहं गाहम् अवगाह्य। अत्र सर्वत्र ल्यबर्थे णमुल्। तस्मिन् सति द्वित्वम्। कामभल्लीरिव वल्लीः दृष्ट्वा दृष्ट्वा स्मारं स्मारं स्मृत्वा स्मृत्वा। कीदृशीं कान्ताम्। कस्य रामसुखस्य अन्तोऽस्याः तां विरहेण रामदुःखदामिति। अद्रिचरो भूत्वा पर्वतचरो भूत्वा दीनं यथा स्यात्तथा अरोदीत् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

हे वृक्षाः पर्वतस्था गिरिगहनलतावायुना वीज्यमाना
रामोऽहं व्याकुलात्मा दशरथतनयः शोकशुक्रेण दग्धः।
बिम्बोष्ठी चारुनेत्री सुविपुलजघना बद्धनागेन्द्रकाञ्ची
हा सीता केन नीता मम हृदयगता को भवान्केन दृष्टा १०
हे गोदावरि पुण्यवारिपुलिने सीता न दृष्टा त्वया
सा हर्तुं कमलानि चागतवती याता विनोदाय वा।
इत्येवं प्रतिपादपं प्रतिनगं प्रत्यापगं प्रत्यगं
प्रत्येणं प्रतिबर्हिणं तत इतस्तां मैथिलीं याचते ॥११॥

• हे वृक्षाः यूयं पर्वतस्थाः उच्चस्थैः सर्वं दृश्यत इति ध्वनितम्। केनापि सीता नीता हृता वा भवतां मध्ये केनापि दृष्टा। कीदृशा यूयं गिरिगहनलतावायुना वीज्यमाना। एतेन वायुवशात् तत्रस्थाऽपि सीता भवद्भिर्ज्ञायत एवेत्युक्तम्। इत्युक्ते वृक्षा ऊचुः। भवान् कः। राघव आह। अहं रामः। शोक एव शुक्रोऽग्निस्तेन दग्धः "सप्तार्चिर्दमुनाः शुक्रः" इत्यमरः। तर्हि कीदृशी सीतेत्यपेक्षायामाह। बिम्बोष्ठीत्यादि। बद्धा नागेन्द्रस्येव काञ्चिर्यया सा। यद्वा। बद्धा नागेन्द्रस्य काञ्चिर्यया सा। "करिकुम्भमणिस्तोमनानारत्नोत्करोधिता। मध्ये कुम्भाकृतिः स्वर्णा सा नागेन्द्राख्यया मता॥" इति॥ १०॥

ततोऽवतीर्य गोदावरीमासाद्याह। हे गोदावरि त्वया सीता न दृष्टा। कमलान्याहर्तुम् आगतवती रम्यवारिपुलिने विनोदाय वा आगता। इत्यनेन प्रकारेण एवं यथा गोदावरी पृष्टा तथैव प्रतिपादपं पादपं पादपं प्रति जानकीं याचते स्म। इति सर्वत्र युज्यते। आपगा नदी। अगो गिरिः। एणो मृगः॥ ११॥

( पुनर्लक्ष्मणमासाद्य वैक्लव्यं नाटयति । )

के यूयं वद नाथ नाथ किमिदं दासोऽस्मि ते लक्ष्मणः
को हं वत्स स आर्य एव भगवानार्यः स को राघवः ।
किं कुर्मो विजने वने तत इतो देवी समुद्वीक्ष्यते
का देवी जनकाधिराजतनया हा हा प्रिये जानकि ॥१२॥

सौमित्रिणा सह रामः—( अत्रान्तरे वनान्तं पर्यटन् जनकतनयातापिनः पापिनो रजनिचरपतेर्भुजभुजङ्गमण्डलीखण्डितोरगवधूवैधव्यधातारं विपक्षरक्षसा निहतं घोरसमरमूर्च्छितं पक्षिराजं जटायुषं भग्नं च रावणरथमालोक्य । )

ज्ञात्वा दशरथस्यैनं मित्रं शत्रुनिषूदनम् ।
हा तात किमिदं नाम रामः पक्षीन्द्रमब्रवीत् ॥ १३ ॥

---

वद यूयं के एकवचने बहुवचनं वैक्लव्यादेव । तत्र लक्ष्मणः हे नाथ नाथ आदरे वीप्सा संभ्रमे वा । यद्वा । हे नाथनाथ नाथाः ब्रह्मादयस्तेषामपि नाथ स्वामिन् इदं वैक्लव्यं किम् । अहं ते दासः लक्ष्मणोऽस्मि । हे वत्स अहं कः । लक्ष्मणः स इति प्रसिद्धः । आर्य एव भगवानचिन्त्यैश्वर्यः । रामः सः आर्यः कः । लक्ष्मणः राघवः रघुवंशजन्मा । रामः अत्र विजने जनशून्ये वने किं कुर्मः । लक्ष्मणः इतस्ततः देवी समावीक्षते । रामः देवी का । लक्ष्मणः जनकाधिराजतनया । रामः हा कष्टं हे प्रिये हे जानकि । विषमोऽयमलंकारः । उक्तं च वीरभानौ । “ उक्तिप्रत्युक्तिचातुर्यान्निबद्धो विषमो मतः । ” इति ॥ १२ ॥

इदं तव किं जातम् ॥ १३ ॥

जटायुः–अर्द्धरात्रे दिनस्यार्द्धे अर्द्धचन्द्रेऽर्धभास्करे ।
रावणेन हृता सीता कृष्णपक्षे सिताष्टमी ॥ १४ ॥

अर्द्धेति ॥ दिनस्यार्द्धे देवदिनस्यार्द्धे सति तेन चैत्र उक्तः मकरादिषट् दिनं कर्कादिषट् निशेति श्रीपतिः । "मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः ।" इत्यमरः । तत्राप्यर्द्धरात्रे सति पितॄणामर्द्धरात्रे सति अकृष्णपक्षे पितॄणां पाक्षिकी रात्रिर्भवति । तदर्द्धे पक्षार्धे सति । कस्य पक्षस्येत्यपेक्षायामाह । कीदृशे अर्द्धरात्रे अकृष्णपक्षे अकृष्णः शुक्लः पक्षो यस्मिन् एतेन चैत्रशुक्लपक्षो द्योतितः । पुनः कीदृशे अर्द्धरात्रे अर्द्धः अष्टकलश्चन्द्रो यस्मिन् तत्रापि यस्यां तिथौ हृतेत्यपेक्षायामाह । यत्र यस्मिन् दिने सिताष्टमी सितेन शुक्रेण युता अष्टमी । मध्यमपदलोपी समासः । तत्रापि कस्यां वेलायामित्यपेक्षायामाह । कस्मिन् सति अर्द्धभास्करे सति मध्यंदिनवर्तिन्यादित्ये सति सर्वपदैश्चैवमुक्तं भवति । चैत्रशुक्लपक्षसिताष्टमीमध्याह्ने सीता हृतेति । केचिदेवं व्याकुर्वन्ति । कृष्णपक्षे सीता हृता। "कृष्णो स्त्री माघकृष्णयोः" इति चरकः । कीदृशे कृष्णपक्षे पितॄणामर्द्धरात्रे शुक्लपक्षः पितॄणां रात्रिः । पुनः किंभूते दृष्टः माघस्नाननिमित्तम् अर्द्धभास्करो यस्मिन् । "अर्द्धोदिते रवौ स्नातो माघे स्वर्गमितो भवेत् ।" अन्यत् पूर्ववत् । एतदर्थेन एवमुक्तं भवति । माघशुक्लपक्षसिताष्टमीमध्याह्ने सीता हृतेति । उक्तं च वाराहपुराणे । "चैत्रमासासिताष्टम्यां मुहूर्ते वृन्दसंज्ञिते । राघवस्य प्रियां सीतां जहार दशकन्धरः ॥" इति वृन्दः । पूर्वाह्ण इति धरणिः ॥ १४ ॥

१ यत्रेति वाक्यशेष.

रामः—

भग्नोऽयं कथमस्ति रावणरथस्तातेन वज्राङ्कुर-
क्रूरावस्करणेन भङ्गुरलसत्कोटित्रुटज्ज्यं धनुः ।
हे सीरध्वजराजपुत्रि स तथा दृष्टस्त्वया धन्यया
पक्षीन्द्रो दशकण्ठकुञ्जरशिरःसंचारिपञ्चाननः ॥ १५ ॥
तात त्वं निजतेजसैव गमितः स्वर्गं व्रज स्वस्ति ते
ब्रूमस्त्वेकमिमां वधूहृतिकथां तातान्तिके मा कृथाः ।
रामोऽहं यदि तद्दिनैः कतिपयैर्व्रीडानमत्कन्धरः
सार्द्धं बन्धुजनेन सेन्द्रविजयी वक्ता स्वयं रावणः ॥ १६ ॥

रामः—( वनेचरान् मृगान् विलोक्य ) आः खलु दुरात्मनाममीषां रूपेण मारीचिना प्रपञ्चमवलम्ब्य प्राणवल्लभाश्लेषतो विश्लेषितोऽहमिति । अहं पुनः मृगीचक्रवधेन ।

---

भग्नोऽयमिति ॥ वज्राङ्कुरवत् वज्रधारावत् क्रूरं दुःसहं यदवस्करणं तुण्डेनोद्भिद्याकर्षणं तेन भङ्गुरे वक्रे लसन्त्यौ ये कोटी धनुष अग्रभागौ ताभ्यां सकाशात् त्रुटन्ती ज्या यस्य तद्धनुरपि कथं भग्नमित्युक्त्वा पुनः दृष्टवत् सीतामाह । सीते धन्यया त्वया स पक्षीन्द्रो जटायुः तथा युध्यमानो दृष्टः धार्मिकदर्शनात् धन्यत्वम् । यो दशकण्ठ एव कुञ्जरः तच्छिरस्सु संचरणशीलः सिंह इति ॥ १५ ॥

सीताहृतिं दशरथं मा श्रावयेति लज्जया वारयति । हे तात त्वं निजतेजसैव निजदर्पेणैव स्वर्गं गमितः प्रापितः व्रज । ते स्वस्ति स्वर्गात्ते मोक्षोऽस्तु परंतु एकं निरुपमं त्वां प्रति ब्रूमः । किं तदित्याह ।

(कुरङ्गाणां प्रियाविरहमुत्पादयामीति विचार्य।)

अमोघाः कृष्णनालीकाः काननेषु मृगीवधे ।
रामः किं दूरघातीति सीतानयनशङ्कया ॥ १७ ॥

( ततः कथमपि भगवति भास्करेऽस्ताचलावलम्बिनि प्रलयकालोषितप्रचण्डमार्त्तण्डमण्डलमिवोदितं चन्द्रमण्डलं तरुणकोपारुणदारुणं तरणिनन्दनमिवावलोक्य । )

रामः—

सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोयमुन्मीलति ।

---

इमामिति । बन्धुजनेन कुम्भकर्णादिना इन्द्रविजयी मेघनादस्तेन सहितः वक्ता शीघ्रं वदिष्यतीति ॥ १६ ॥

" आस्तु स्यात्कोपपीडयोः " इत्यमरः । अमोघा इति ॥ काननेषु मृगीवधे मृगीवधनिमित्तं कृष्टाः आकृष्टाः ये नालीकाः बाणाः तस्य रामस्य ते अमोघाः सफलाः । " नालीकशरमार्गणाः " इति विश्वः । दूरान्न हननमिति चेत्तत्राह । दूरघाती दूरादेव हन्तुं शीलमस्य रामस्यास्तीति बाणसफलत्वदूरघातित्वयोः सतोरपि सीतानयनशङ्कया इमे नेत्रे सीतायाः नयने भवतः इति तन्नेत्रसादृश्यमात्रमासां नेत्रे तिष्ठतीति तद्धनने स्वीयापराधः स्यादिति शङ्कया इति किं प्राप्तदयावानभूदित्यर्थः । इतिशब्देन दया किंशब्देन प्राप्तिरिति । " समाप्तौ च परिच्छेदे दयायामिति संमतम् । " इति धरणिः । " निन्दने च वितर्के च प्राप्तौ प्रश्ने किमव्ययम् । " इति विश्वः । शङ्कोक्ता रसोदधौ । " स्वीयापराधचौर्यादितो मता शङ्का " इति ॥ १७ ॥

" वियोगिपापिविरहिजीवेषु तरुणोऽस्त्रियाम् । " इति चक्रः । बलात्तरुणेषु वियोगिषु यः कोपस्तेनारुणं चन्द्रमण्डलं यद्वा तरु-

वत्सैतद्भवता कथं नु विदितं धत्ते कुरङ्गं यतः
क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ॥१८॥

( रामश्चन्द्रमधिक्षिपति । )

मन्दरेण मथितोऽसि न पापिन्
ज्वालितोऽसि तमसा न दुरात्मन् ।
त्वां शरेण शतधा परिनिन्ये
जानकीमुखसमो यदि न स्याः ॥ १९ ॥

अपि च लक्ष्मणं प्रति ।

सौमित्रे दाववह्निस्तरुशिखरगतो वार्यतां निर्झरौघैः
का वार्त्ता दाववह्नेरयमुदयगिरेरुज्जिहीते हिमांशुः ।

---

णेषु पापिजनेषु यः कोपस्तेनारुणं तरणिनन्दनं यममिवेति कुरङ्गनयननिभे चञ्चले नयने यस्याः सा मध्यमपदलोपी समासः । उक्तिप्रत्युक्तार्थज्ञानं विषमोऽयमलङ्कारः । तल्लक्षणं पूर्वमुक्तम् ॥ १८ ॥

मन्दरेणेति ॥ हे पापिन् परसंतापदातः मन्दरेण गिरिणा अब्धिमन्थने न मथितोऽसि न चूर्णीकृतः ततोऽपि तमसा राहुणापि न ज्वालितः क्रोधाग्निना न दग्धः । "तमस्तु राहुः स्वर्भानुः" इत्यमरः । स्वाशक्तौ मोहिनीसूचनेनापि दुरात्मन्नित्युक्तम् । ताभ्यां परिमुक्तमपि त्वाम् अहमेव शतधा शतप्रकारं परिनिन्ये प्रापयामि । यदि त्वं जानकीमुखसमो न स्याः । अत्रोन्मादावस्थान्तरङ्गवाचिकव्यथोदितायासो दर्शितः । तदुक्तं रसोदधौ । "स्यादुन्मादः कान्ताचित्तव्यथागोचरायासः । कायिकवाचिकभेदाद्द्विधोदितोऽयं व्यथोदितायासः ॥ तत्समं द्रव्यं दृष्ट्वा यदुपालम्भः स वाचिकाख्यः । " इति । तत्समं द्रव्यं मुखादिसदृशं चन्द्रादि ॥ १९ ॥

अत्राप्युक्तिप्रत्युक्तिः वार्यतां शाम्यताम् । उज्जिहीते उदयते

धत्ते धूमं हिमांशुः कथय कथमयं नैव धूमो धरण्या-
श्छायेयं सङ्गताभूदयि धरणिसुते कुत्र कांतेऽसि सीते२०

रामः—(सकरुणम् आत्मनि प्राणवल्लभायाःपरमप्रेमाणमधिगम्य।)

शशाङ्क जगुरङ्कमेके
पङ्कं कुरङ्गं प्रतिबिम्बिताङ्गम् ।
धूमं च भूमण्डलमुद्धताग्ने-
र्वियोगजातस्य मम प्रियायाः ॥ २१ ॥

रे रे निर्दय दुर्निवार मदन प्रोत्फुल्लपङ्केरुहान्
बाणान्संवृणु संवृणु त्यज धनुः किं पौरुषं मां प्रति ।
कान्तासङ्गवियोगजातहुतभुग्ज्वालाप्रदग्धं वपुः
शूराणां मृतमारणे न हि वरो धर्मः प्रयुक्तो बुधैः ॥२२॥

---

चन्द्रे श्यामत्वमालक्ष्याह। धूममिति। अयि इति कोमलामन्त्रणे॥२०॥

आत्मनि हृदये एके कवयः शशाङ्के चन्द्रे अङ्कं जगुः। "अङ्कं पदे लक्षणे च" हराशिरस्थानं तदभावादनुज्ज्वलत्वम। एके पङ्कं वियोगिदुःखदातृत्वजन्यपापं श्याममेव।" अस्त्री पङ्कं पुमान् पाप्मा" इत्यमरः। एके अस्मिन्नेव प्रतिबिम्बिताङ्गं कुरङ्गमेतं चन्द्रवाहनं मृगं जगुः। मृगप्रतिबिम्बामिति। चशब्दात्पुनर्ग्रहणं प्रतिबिम्बिताङ्गं भूमण्डलं जगुः उक्तवन्तः। उक्ताक्षेपोऽयमिति। अहं तु प्रियायाः सीतायाः सकाशादुद्यतो योऽग्निस्तस्य धूमं शङ्के मन्ये। कीदृशस्योद्धताग्नेः मम वियोगजातस्य ॥ २१ ॥

अथ सीतास्मरणादुच्छ्रितं काममाक्षिपति—रे रे इति ॥ रे रे निर्दय कृत्यज्ञानहीन भो दुर्निवार दुराग्रह मदन पङ्केरुहानेव बाणान् संवृणु संवृणु उपसंहरेति। संभ्रमे वीप्सा। ममेत्यध्याहारः। वपुः कान्तासङ्गस्य यो वियोगः तेन जातो यो हुतभुक् अग्निस्तस्य ज्वालाभिः प्रदग्धमस्तीति। अन्यत् सुगमम् ॥ २२ ॥

[redacted]



अथवा ।

आपुङ्खाग्रममी शरा मनसि मे मग्नाः समं पञ्च ते
निर्दग्धं मदनाग्निना वपुरिदं तैरेव सार्द्धं पुनः ।
कष्टं काम निरायुधोऽसि भवता जेतुं न शक्यो जनो
दुःखी स्यामहमेक एव सकलो लोकः सुखं जीवतु ॥२३॥

(तत्रापि क्षणं विकसिताशोकतरुतले विश्राम्याह स्म दाशरथिः।)

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयो-
स्तुल्यं सर्वमशोक केवलमहं धात्रा सशोकः कृतः॥२४॥

---

कामव्यथामनुभूयान्यवियोगिनोनुकम्पयन्निवाह—आपुङ्खाग्रमिति ॥ अथवा मां प्रहर बाणान् मा संवृणु । हे काम ते अमी पञ्चैव बाणाः क्षोभणमोहनशोषणविद्रावणनिलायनशीलाः एते आपुङ्खाग्रं यथा स्यात्तथा समम् एकदैव मम मनसि हृदये मग्नाः सन्ति। इदं मदीयं वपुः ते तव बाणैः सार्द्धं मदनाग्निना निर्दग्धं दग्धपटवज्जातम् । यद्वा । मदनेति संबुद्धिः । अग्निना वियोगाग्निना जातं पूर्वं यज्जितं तज्जितमेव पुनरपि अधुना हे काम भवता जनो लोकः जेतुं शक्यो न । यतस्त्वं निरायुधोऽसि दग्धबाणत्वादन्यास्त्राभावाच्च कष्टं यथा स्यात्तथा एक एवाहं दुःखी स्याम् । त्वद्बाणशल्यभरणत्वात् । अन्यो लोकः सुखं जीवतु त्वदातङ्काभावात् ॥ २३ ॥

हे अशोकवृक्ष आवयोः सर्वं वृत्तं तुल्यं परं तु एतन्महद्वैलक्षण्यं यत्त्वम् अशोकः अहं धात्रा केनापि दुरदृष्टेन सशोकः कृतः प्रियाविरहितत्वात् तुल्यत्वमेव द्योतयति । शिलीमुखाः भ्रमराः बाणा अपि वा स्मरधनुर्मुक्ताः पुष्पेभ्यो निर्मुक्ताः पुष्पधन्वा उभयथा

( पुनरपि प्रलपति । )

हारो नारोपितः कण्ठे मया विश्लेपभीरुणा ।
इदानीमन्तरे जाताः पर्वताः सरितो द्रुमाः ॥ २५ ॥
चन्द्रश्चण्डकरायते मृदुगतिर्वातोऽपि वज्रायते
माल्यं सूचिकुलायते मलयजो लेपः स्फुलिङ्गायते ।
रात्रिः कल्पशतायते विधिवशात्प्राणोऽपि भारायते
हा हन्त प्रमदावियोगसमयः संहारकालायते ॥ २६॥
मांसं काश्यार्दभिगतिमपां बिन्दवो बाष्पपाता-
त्तेजः कान्तापहरणवशाद्वायवः श्वासदैर्घ्यात् ।

---

ग्राह्यः । अशोकः स्त्रीपादस्पर्शात् अलं विकसतीति श्रुतिः । रामेऽपि पादतलाहतिः पद्माख्यबन्धाभिप्रायेण । तदुक्तं कामावतारे । "धृतैकपादा जघने कुर्वत्यन्यपदाहतिम् । शनैः शनैर्निधुवने पद्मबन्धस्तदा मतः ॥" इति ॥ २४ ॥

सुगमम् ॥ एतेन दैवस्य दुर्लङ्घ्यत्वमुक्तम् ॥ २५ ॥

चण्डकरो रविः तद्वदाचरति सूची वस्त्रवेधनलोहस्तत्कुलवदाचरति । "स्फुलिङ्गोऽग्निकणः पुमान्" इति विश्वः । एतत्पद्येन कुट्टमितं द्योतितम् । तदुक्तं रसोदधौ । "शशिपाटीरालेपं पङ्कजयाम्यानिलादिरूपयाति । सर्वं दुःखवदेतत्कुट्टमितं तत्र संभवति ॥" इति ॥ २६ ॥

तद्विरहे प्राणधारणादावात्मनि काठिन्यं प्रारब्धावश्यभोगत्वं दर्शयति—मांसमिति ॥ इत्थमुक्तप्रकारेण विरहवपुषः तस्मात्सकाशात्सर्वं तत्त्वजातं नष्टम् एवं तत्त्वाभावेऽपि सति रामचन्द्रो जीवति। यतः कुलिशकठिनः वज्रवत् कठिनहृदयः एतात्किमत्याश्चर्यम् । एतेन प्रारब्धावश्यभोगत्वं दर्शितम् । तत्त्वनिर्गमप्रकारमाह । अभिगतिं स्वसहचरं मांसं नष्टमभूत् । अविरलबाष्पपातादपां बिन्दवोऽपि

**इत्थं नष्टं विरहवपुषस्तन्मयत्वाच्च शून्यं**
**जीवत्येवं कुलिशकठिनो रामचन्द्रः किमेतत् ॥ २७ ॥**

**सलक्ष्मणो रामः—एवं दैवयोगाद्घोरगवयगजभुजङ्गशरभशार्दूलकालबहुलकोलाहलाहूतभूतवतालसमुत्तालकालकरालचक्रवालकण्ठनालप्रोच्छलत्तुमुलघोरचीत्कारमिलितबहुलान्धकारकलि-**

---

नष्टाः । कान्तापहरणवशात् तेजो नष्टं तेजोनाशः । श्वासदैर्घ्याद्वायवो नष्टाः । तन्मयत्वात्सीतागतान्तरत्वात् शून्यम् आकाशनाशः । उक्तं च सिद्धान्तमुक्तावल्याम् । "तास्मिन् यत्कठिनत्वं सा भूः । तज्जलं यत् द्रवात्मकम् । तेजो भवेद्यदुष्णं तत् । संचरेद्यः स मारुतः । सुषिरं यत्तदाकाशमिति पञ्चात्मकं वपुः" इति । कारणाभावात्कार्यस्याप्यभाव इति न्यायादेतत्कार्येन्द्रियगणोऽपि नष्ट इति । उक्तं च तत्रैव । "श्रवणौ व्योमतो वायोस्त्वङ्नेत्रे तेजसो जलात् । रसना भूमितो घ्राणमिति पञ्चेन्द्रियोद्भवः॥" इति । ग्राहकाभावे ग्राह्यस्याप्यभाव इति न्यायादिन्द्रियग्राह्यविषयाणामप्यभावः । एतेन वाय्वादिपञ्चकम् इन्द्रियपञ्चकं विषयपञ्चकं नष्टमिति ध्वनितम् । कर्मेन्द्रियाणां लयो वायावेव तेषां प्राणशक्तिमत्त्वात् मनोबुद्धिचित्ताहंकाराणां पृथिव्यप्तेजोवायूनां सात्विकांशेभ्यो जातानामतस्तेषां पृथिव्यादिष्वेवान्तर्भावस्तदभावे तेषामप्यभावः । अतश्चतुर्विंशतितत्त्वविगमेऽपि यज्जीवति तदाश्चर्यमिति ॥ २७ ॥

विन्ध्याटवीवर्णनापूर्तिं मन्यमानः कविः गद्यत्रयेण वर्णयति—एवमित्यादिना ॥ अत्र श्लोकचतुष्टयस्यैक एव योगः। एवं दैवयोगादटवीमटन् महावराहस्कन्धारूढं वामतो विलोक्याह स्म । राम इति अग्रिमश्लोकेनान्वयः । कीदृशी अटवी एवं पूर्वरीत्या दैवयोगाद्विधिवशाद्भुजङ्गश्चित्रमृगः। "भुजङ्गौ सर्पचित्तलौ" इति धरणिः।

तगह्वरान्तरालविलसदविरलसरलपरिमलबहुल-
चञ्चलगलद्विमलमकरन्दबिन्दुकीलालजालपि-
च्छिलालवाललुलितप्रमत्तालिमालमन्दानिला-
न्दोलवाचालदरदलितललितमाकन्दवृन्दबकुल-
मुकुलधूलिजालखेलत्कोकिलकुलविलासिनीको-
मलालापनिखिलगिरिशिखरशिखिलास्यलीला-
कलापसानुकूललोलद्दोलाङ्कूलचञ्चचकोरचक्रम-
ञ्जुगुञ्जद्वृक्षपक्षिणीपक्षवृद्धिम् ॥ २८ ॥

---

शरभोऽष्टापदः कोलो वराहः । "कोलः पोत्री किरिः किटिः" इत्यमरः । गवयादिकोलान्तानां कोलाहलेनाहूताः ये भूताः वेतालाश्च रुद्रगणभेदाः तेषां समुत्तालाः ये कालवत्करालाः भयंकराश्चक्रवालाः समूहाः । "चक्रवालं तु मण्डलम्" इत्यमरः । तेषां कण्ठनालेभ्यः प्रोच्छलत् प्रकटीभवत्तुमुलो व्यक्तो घोरचीत्कारस्तस्मान्मिलितो यो बहुलान्धकारस्तेन कलिताः वेष्टिताः ये गह्वराणामन्तरालाः मध्यप्रदेशाः तेभ्यो विलसत् योऽविरलः सरलपरिमलः बहुतरसरलवृक्षगन्धः तद्युक्ताः ये बहुलाः बहुतराः गलन्तः स्वच्छमकरन्दबिन्दवस्त एव कीलालजालं जलपूरम् । "पयः कीलालममृतम्" इत्यमरः । तेन पिच्छिला पूर्णा ये आलवालाः वृक्षमूलगर्त्ताः तत्र लुलिताः लुब्धा ये मत्ताः अलयो मत्तभ्रमरास्तेषां मालाः पङ्क्तय एताभिश्च परं मन्दानिलान्दोलनेन वाचालानि शब्दितानि दरं दलितानि फुल्लानि ललितानि यानि बकुलमुकुलानि तेषु खेलन्त्यो याः कोकिलकुलविलासिन्यस्तासां कोमलालापेन निखिलानि पूर्णानि वृक्षशिखराणि तेषु मयूरनर्त्तनलीलासमूहस्तस्य सानुकूलनर्त्ततोत्साहहेतव [illegible] चञ्चलन्[illegible]श्चकोरास्तेषां चक्रेण युक्तं यथा स्यात्तथा

गगनचुम्बनबद्धलक्ष्यविपुलफलाभारावलम्बना-
लम्बितानन्तजन्तुसंतोषपोषनिर्दोषभूषणाध्युषि-
तनिःशेषसविशेषामृतवर्षस्पर्द्धिवर्द्धिष्णुरसरसा-
लप्रियालहिन्तालतमालकृतमालविशालशालम-
लमालूरशल्लकीशिरीषासनशमीशाकशिंशपा-
शोकचम्पकसुरदारकोविदारकाणकारसिन्दुवार-
बहुसारनिम्बजम्बूदुम्बरकदम्बकरञ्जसौभाञ्जन-
बकुलनिचुलकरूखर्जूरबीजपूरजम्बीरभाण्डीरवा-
नीरकाश्मीरनारिङ्गकर्मरङ्गकदलीचन्दनालिङ्गि-
तालवल्लीधात्रीवटकुटजपाटलाङ्कोलकङ्कोलचो-
लभल्लातकबिभीतकहरीतक्याम्रातककेतकक-
ङ्कतवैकङ्कतमधूकबन्धूकजयन्तीजपाश्वत्थकपि-

---

गुञ्जन्त्यो याः वृक्षस्था पक्षिण्यस्तासां पक्षस्य आत्मवर्गस्य वृद्धिर्यस्यां तामटवीमटन्नित्यग्रिमेनान्वयः ॥ २८ ॥

पुनरपि अटवीमेव वर्णयति । पुनः किंविशिष्टामटवीं गगनचुम्बने आकाशावलोकने बद्धं लक्ष्यं यैस्ते उन्नतवृक्षाः तेषां ये विपुलाः फलभारास्त एवालम्बनं तत्रावलम्बिता ये अनन्ताः जन्तवः तेषां संतोषपोष एव निर्दोषभूषणं येषां तेष्वध्युषितः स्थितो यो निःशेषः पूर्णः सविशेषो विविधस्वादुः अमृतवर्षस्पर्धी अमृतादपि रमणीयः वर्धिष्णुः प्रतिदिनं वर्द्धमानो यो रसस्तद्युक्ताः ये रसालादयस्तैर्दुस्तराम् । "राजादनः प्रियालः स्यात्" इत्यमरः । हिन्तालो हिङ्गोटकः । कृतमालः कर्णाचल । मालूरो बिल्वः । कोविदारश्चमरिकः । सिन्दुवारः बहुसारः सप्तपर्णः । "सौभाञ्जने शिग्रु तीक्ष्णगन्धका क्षीवमोचका । " इत्यमरः । " निचुलो हिजलोम्बुजः ।

त्थतिन्तिणीनागकेसरादिदुस्तरामरण्यानीं पर्यटन् महावराहस्कन्धारूढमुत्कटं रटन्तं करटं वामतो विलोक्य ॥ २९ ॥

दक्षिणतस्तु दक्षिणाचलप्रचलितमलयमालतीमरुचकलवङ्गकङ्कोलदमनकजातीतगरशतपत्रादिकमलमुकुलकुमुदिनीकह्लारपरिमलमिलितचुम्बितताम्रपर्णीकावेरीतुङ्गभद्रासान्द्रगम्भीरनीरधारातरङ्गपरिपीतमैत्रावरुणतरुणीलङ्काशशाङ्करुद्रपादाद्रिसरलसिंहलसालकश्रीगोपालकां पाण्ड्यमण्डलगिरिप्रवालचोलकुन्तलकेरलपुन्नाटककर्णाटककरहाटविदग्धान्ध्रकामिनीनीरन्ध्रपीनस्तनवदनघनजघनदोर्मूलधम्मिल्लभारान्तराधि-

---

मञ्जिष्ठा रोमरङ्गोऽस्त्री कर्मरङ्गोऽगरुः पुमान् ॥ ” इति धरणिः । अम्लातकोऽम्लवेतः । वैकङ्कतः कङ्कतिकः । उत्कटं यथा स्यात्तथा रटन्तं करटं काकं वामतः वामभागे । “ काके तु करटारिष्ट”इत्यादि॥२९॥

रामः सविस्मयं यथा स्यात्तथा दक्षिणभागे खञ्जनमवलोक्य सानन्दं यथा स्यात्तथा अभवदिति शोकभञ्जनं काकदर्शनाशुभहरं च । पुनः वामेनाक्ष्णा काकं दृष्ट्वा सबाष्पं सकरुणं च यथा स्यात्तथा सीदतीत्यन्वयः। कीदृशं खञ्जनम् एवंभूतसर्पफणामणौ क्रीडन्तं दक्षिणाचलेभ्यः प्रचलिताः प्रसृताः ये मलयसंबन्धिनो मालत्यादयः तेषां यः परिमलो तस्य मीलनमेकीभावः तेन चुम्बिता युक्ताः याः कावेर्यादिनद्यस्तासां सान्द्राः गभीराश्च या नीरधारास्तासां तरङ्गैः परिपीता मैत्रावरुणस्यागस्त्यस्य तरुणी. कान्ता सा च लङ्कापर्यन्तदेशविशेषाणां कामिन्यश्च तासां नीरन्ध्रपीनस्तनादि-

ष्ठितश्रीखण्डागरुकर्पूरमृगमदकुङ्कुमस्तोमसंभूतयक्षकर्दमविमर्दवर्धितविविधगन्धकुसुमबहुलपरिमलोद्गारिमारुताशनोत्थितक्षीरनीहारकाश्मीरस्फटिकशुद्धशङ्खकर्पूरकुन्दावदातमहाभुजङ्गस्फीतफूत्कारप्रफुल्लफणामणौ क्रीडन्तं शोकभञ्जनं खञ्जनं चावलोक्य वामेनाक्ष्णा सकरुणं सबाष्पं च दक्षिणेन सविस्मयं सानन्दमभवदिति ॥ ३० ॥

काकः कपोलस्थलसंस्थितो मे
कोलस्य वामे व्यसनं सदौस्थ्यम् ।
राज्यं भुजङ्गस्य फणाधिरूढो
व्यनक्त्यहो दक्षिणखञ्जरीटः ॥ ३१॥

( क्षणं विचिन्त्य विश्राम्य च सबाष्पम् । )

भो भो भुजङ्ग तरुपल्लवलोलजिह्व
बन्धूकपुष्पवरशोभित पुष्करास्त्र ।

---

भारान्तरालेषु अधिष्ठितो यः श्रीखण्डादिसंभूतयक्षकर्दमः तेन विमर्दः संमर्दस्तस्माद्विवर्धितो यो विविधगन्धश्चासौ कुसुमानां बहुपरिमलश्च तयोः समुद्गारी प्रक्षेपको यः मारुत एवाशनं भोजनं यस्य स चासौ उत्थितः अर्धोदयश्चासौ क्षीरनीहारकाश्मीरस्फटिकशुद्ध शङ्खकर्पूरकुन्दावदातः श्वेतोज्ज्वलश्चासौ महाभुजङ्गश्च तस्य स्फीताः ये फूत्काराः तैः प्रफुल्ला या फणा तस्याः मणौ शिखरे क्रीडन्तम् ॥ ३० ॥

कोलस्य वराहस्य कपोलस्थलसंस्थितः स्कन्धमवलम्बितः सदौस्थ्यं समनोनवस्थानम् अहो एतदाश्चर्यमेकदैवार्थद्वयसूचकशकु-

पृच्छामि ते पवनभोजन कोमलाङ्गी
काचित्त्वया शरदचन्द्रमुखी न दृष्टा ॥ ३२ ॥

भुजङ्गमः—( सुवाणीं कथयति । )

गता गता चम्पकपुष्पवर्णा
पीनस्तनी कुङ्कुमचर्चिताङ्गी ।
आकाशगङ्गेव सुशीतलाङ्गी
नक्षत्रमध्ये इव चन्द्ररेखा ॥ ३३ ॥

व्यसनं किमतोऽप्यास्ते ज्ञातश्चाभ्युदयो मम ।
शरणं मरणं राज्यं मा पुनर्लक्ष्मणेऽस्तु तत् ॥३४॥
ततो वामं तिरस्कृत्य पुरस्कृत्य च दक्षिणम् ।
धन्यो वन्यशरण्यां तामरण्यानीं स्म गाहते ॥ ३५ ॥

किं च ।

किष्किन्धाद्रौ रौद्ररुद्रावतारं
दृष्ट्वा रामो मारुतिं वाचमूचे ।

---

नत्वात् दुःस्थितस्य भावो दौःस्थ्यं तेन सह वर्त्तमानम् ॥ ३१ ॥
॥ ३२ ॥ ३३ ॥

ममाभ्युदयो ज्ञात एव उपस्थितराज्यभङ्गात् तर्हि दुःखं भवतु तत्राह । अतः सीतावियोगादपि अधिकं व्यसनं किमास्ते न किमपीति । मम तु मरणमेव शरणं चेत्पुनः राज्यं स्यात्तर्हि लक्ष्मणे अस्तु । तद्व्यसनं लक्ष्मणे मास्तु ॥ ३४ ॥

वामम् अशुभसूचकं काकं दक्षिणं शुभसूचकं खञ्जरीटं "महारण्यमरण्यानि" इत्यमरः । ततो वनान्तरे भ्रमन् किष्किन्धामधिश्रित्य ॥ ३५ ॥

किष्किन्धा गुहा तद्युक्तोद्रिः किष्किन्धाद्रिः तत्र रौद्ररसाश्रयो

सीता नीता केनचित् क्वापि दृष्टा
हृष्टः कष्टं संहरन् प्राह वीरः ॥ ३६ ॥
पापेनाकृष्यमाणा रजनिचरवरेणाम्बरेण व्रजन्ती
किष्किन्धाद्रौ मुमोच प्रचुरमणिगणैर्भूषणान्यर्चितानि ।
हा राम प्राणनाथेत्यहह जहि रिपुं लक्ष्मणेनालपन्ती
यानीमानीति तानि क्षिपति रघुपुरः क्वापि रामाञ्जनेयः॥

रामः—( सकरुणं सबाष्पम् )

जानक्या एव जानामि भूषणानीति नान्यथा ।
वत्स लक्ष्मण जानीषे पश्य त्वमपि तत्त्वतः ॥ ३८ ॥

लक्ष्मणः—( सबाष्पम् )

कुण्डले नैव जानामि नैव जानामि कङ्कणे ।
नूपुरावेव जानामि नित्यं पादाभिवन्दनात् ॥ ३९ ॥

रामः—( आभरणानि हृदये विन्यस्य गाढमालिङ्ग्य )

सर्वेषु सत्स्वपि तवाभरणेषु हारो
नारोपितो हृदि चिरं हृदयंगतोऽपि ।

---

रौद्रः एतादृशो यो रुद्रः तदवतारम् । भो मारुते केनचित्पापेन सीता नीता हृता । एतच्छ्रुत्वा हृष्टः यातरोषः हनुमान् रामं कष्टं संपरिहरन्नाह ॥ ३६ ॥

पापेनेति ॥ किष्किन्धाद्रौ आञ्जनेयो हनुमानिति तान्याभरणानि रघुपतिपुरः चिक्षेप । तानि कानीत्याह । अम्बरेण आकाशमार्गेण आकृष्यमाणा कापि रामा यानि किष्किन्धाद्रौ मुमोच ॥३७॥

अन्यथा संदेहं तत्त्वतः सीतायाः सन्ति न वेति ॥ ३८ ॥ ३९ ॥

तावन्मात्रान्तरासहत्वात् नार्पितः कीदृशो हारः मुक्तार्थं मौक्ति-

मुक्तार्थसूत्रगुणवेधविशुद्धराशि-
स्तत्पङ्क्तिभेदफलदारुणमित्यरोदीत् ॥ ४० ॥

अहह जनकपुत्रीवक्त्रमुद्रामपश्यन्
व्रजति परमहंसो नाक्षमो वापि गन्तुम् ।
तदुरुविरहवह्निज्वालया दग्धदेहः
किमुत पवनसूनो भूषणैः स्तम्भितो मे ॥ ४१ ॥

हनुमान्—( सानुनयम् )

श्रीराम क्षोणिपाल त्यज निजदयिताशोकमेकः सलोकं
लङ्केशं जेतुमीशे तमपि कपिपतेराज्ञयाहं हनूमान् ।
सुग्रीवस्याथ सार्द्धं गिरिमवतरणं पादविन्यासलक्ष्मी-
निक्षेपादुत्पलाक्षक्षपितरिपुबलं दर्शनं त्वं च देहि ॥ ४२ ॥

---

कार्थे यः सूत्रगुणो दोरकः तद्युक्ताः ये वेधकाः छिद्राणि तत्र विशुद्धा सा रत्नराशिः समूहो यस्य सः अत एव दुःखं पङ्क्तिभेदफलेन दारुणम् इति रुरोदेत्यर्थः ॥ ४० ॥

पुनरपि स्वजीवनेऽपि विचिकित्सति—अहहेति ॥ अहहेति खेदे । हे पवनसूनो मे मम परमहंसः परमात्मा जीव एव हंसः एतद्देहं विहाय न व्रजति तत्किम् । गमने हेतुमाह । जनकपुत्रीति । सोऽन्ततः त्वद्दत्तभूषणैः स्तम्भितः उत अथवा गन्तुमक्षमः । अत्र हेतुमाह । तदुरुविरहेति ॥ ४१ ॥

तमपि विश्वजयिनं सलोकं लङ्कावासिराक्षससहितं कपिपतेः सुग्रीवस्य रावणस्तु हनिष्यत एव । अथवा तावत्त्वं सुग्रीवस्यावतरणम् अवतीर्यते यस्मिन्नित्यवतरणं वासस्थानगिरिं पादविन्यासलक्ष्मीनिक्षेपात् सार्थं विधेहीति । कीदृशं गिरिदर्शनात् त्वदवलोकनादेव निरस्तशत्रुपक्षम् ॥ ४२ ॥

ततो हनूमान्सह लक्ष्मणेन
रामेण सुग्रीवपुरःस्थितोऽभूत् ।
तान् तत्र साक्षात्कपियूथनाथः
पापानि दग्धुं दहनं ददर्श ॥ ४३ ॥

श्रुत्वा रामस्य कान्ताहरणमनिलजस्याननाद्वानरेन्द्रो
निःश्वस्यात्मीयमस्यानुवदति पुरतस्तद्बलाद्वालिनोऽपि।
ह्वा नाथे विद्यमाने किमिति रघुपतिस्तं निहन्तुं प्रतिज्ञा-
मारूढः प्रौढरोषानलबहुलकलालंकृतोऽधिज्यधन्वा ४४

सुग्रीवः—

नत्वा ससंभ्रममथो जगदेकवीर-
मालिङ्गयन् रघुपतिं शुशुभे कपीन्द्रः ।
तद्विस्मृतं पुनरिवाभ्यसते प्रियायाः
कन्दर्पकेलिषु पुनर्द्रुतभाविनीषु ॥ ४५ ॥

---

रामेण सह कीदृशेन रामेण सह लक्ष्मणेन लक्ष्मणसहितेने-त्यर्थः । तान् हनूमद्रामलक्ष्मणान् दक्षिणाग्निगार्हपत्याहवनीयान् ॥ ४३ ॥

श्रुत्वेति ॥ वानरेन्द्रः सुग्रीवः अस्य रामस्य पुरतोऽग्निबलादेव वालिनः सकाशात् तत्प्रसिद्धमात्मीयजायाहरणश्रवणं लक्षीकृत्य वदति रघुपतिः तं वालिनम् । इति किं कान्तापहरणदुःखानुभावज्ञत्वात् । अन्यत् सुगमम् ॥ ४४ ॥

नत्वेति ॥ ससंभ्रमं सादरं विस्मृतं चिरं वियोगात् तत्प्रियाया आलिङ्गने कृतप्रतिज्ञे रामे द्रुतभाविनीषु शीघ्रभाविनीषु । अन्यत् सुगमम् ॥ ४५ ॥

अये मरुत्तनय! कोऽसौ चतुर्णां ताटकान्तकः ।

मारुतिः—

ये चत्वारो दिनकरकुलक्षत्रसंतानवल्ली-
मालाम्लानस्तवकमधुपा जज्ञिरे राजपुत्राः ।
रामस्तेषामभवदमलस्ताटकाकालरात्रि-
प्रत्यूषोऽयं सुचरितकथाकन्दलीमूलकन्दः ॥ ४६ ॥

ततस्ततः ।

श्रुत्वा वाली तदनु महतीं राघवस्य प्रतिज्ञां
तालान्सप्त प्रकृतिकुटिलान्प्रेरयामास योद्धुम् ।

---

ये चत्वारो रामभरतलक्ष्मणशत्रुघ्नाख्याः राजपुत्राः दशरथसुताः जज्ञिरे तेषां चतुर्णां मध्ये रामः ताटकैव कालरात्रिः तस्याः प्रत्यूषोऽयं रामः तद्धन्तायमित्यर्थः । ननु स्त्रीवधात् सागाः किन्नेत्याह । अमल इति । अमलत्वे हेतुः सुचरितं पुण्यार्थं चरितं तस्य कथा नानाविनोदपरिहारवाक्यैर्गुणकथा सैव कन्दली तस्याः मूलस्यापि कन्दः प्रसरणशीलानि मूलानि तन्निदानमध्यो ग्रन्थिः कन्दः यथा छिन्नापि कदली उत्पद्यते एवमाच्छिन्नोऽपि धर्मः यतः पुनः पुनरुत्पद्यते । सर्वे कीदृशा इत्यपेक्षायामाह । दिनं करोतीति दिनकरस्तस्य कुले जातानां क्षत्रियाणां संतान एव वल्ली तस्या माला परम्परा तस्याः अम्लानस्तवकः पुष्पगुच्छः तेषां मधुपाः रविवंशक्षत्रिययशोवतंसमधुपा इत्यर्थः ॥ ४६ ॥

अजेयानां हननकर्तृत्वान्महतीमित्युक्तं तालांस्तालवृक्षान्तर्गतदैत्यानेव । सौमित्रिः अङ्घ्रिभारेण चरणाङ्गुष्ठाविष्कृतभूभारेण सरलानकृत। अत्र हेतुः शेषपृष्ठस्थानि मूलानि येषां ते तान् । एतेनैवमुक्तं भवति । कुण्डलीभूतदेहशेषपृष्ठस्थमूलत्वात् तेऽपि प्रकृतिकुटिला

सौमित्रिस्तानकृत सरलाञ्छेषपृष्ठस्थमूलान्
भारेणाङ्घ्रेरथ रघुपतिः संदधे दिव्यमस्त्रम् ॥ ४७॥

लक्ष्मणः—( साशङ्कं रामं प्रति ) देव ! ज्ञात्वा बाणः प्रहन्तव्यः यतः ।

एकदैव शरेणैकेनैव भिन्नकलेवराः ।
म्रियन्ते सप्त तालास्तं घ्नन्ति हन्तारमन्यथा ॥ ४८ ॥

रामः—( सावज्ञम् )

मा भैषीर्मयि सौमित्रे राघवेऽधिज्यधन्वनि ।
सतां देहं परित्यज्य निर्जगामासतां भयम् ॥ ४९ ॥

( करेण बाणमालभ्य )

भावोऽस्ति चेत्कुशिकनन्दनपादयोर्मे
यद्यस्म्यहं द्विजतिरस्कृतिरोषहीनः ।
नान्याङ्गनासु च मनः शर सप्त तालान्
भित्त्वा तदा प्रविश भूतलमप्यगाधम् ॥ ५० ॥

---

इति । कार्यं निदानगुणं हि विधत्ते इत्युक्तत्वात् । चरणभारेण शेषशिरःसमाक्रमणात् सरलतया वृक्षा अपि सरला जाता इति सूचितम् । शेषं सुगमम् ॥ ४७ ॥

अन्यथा एकदैव सप्तानामपि हननाभावे तत्रापि एकेनैव बाणेन एकेन ॥ ४८ ॥

भयं सतां देहं त्यक्त्वाअसतां देहं निर्जगामेति । अतः परदारहरणत्वात् वालिनस्तत्र भयमिति भावः ॥ ४९ ॥

द्विजैः कृता या मे तिरस्कृतिस्तया यो रोषः तेन हीनः । यद्वा । द्विजानां तिरस्कृतिस्तेषु रोषश्च तद्रहितः ॥ ५० ॥

एकेनैव शरेण बालकदलीकाण्डप्रभङ्गक्रमात्
कृत्तेषु प्रथमेषु दाशरथिना तालेषु सप्तस्वथ ।
अश्वाः सप्त जगन्ति सप्त मुनयः सप्ताब्धयः सप्त गाः
सत्यं सप्त च मातरो भयभृतः संख्यानुसाम्यादिह॥९१॥

( रामबाणः सक्षोभम् )

बाणः प्रमाणमधिगम्य वसुंधरायाः
संबोधयन्निव भुजङ्गमभङ्गभीत्या ।
ब्रह्माणमम्बरचरान्विधुनोति पक्षान्
पुङ्खावशेष इति रामकराद्विमुक्तः ॥ ९२ ॥

पौरंदरिः—( सक्रोधम् )

श्रुत्वा हतान्समरमूर्धनि सप्त तालान्
रामेण पापहृदयेन विनापराधम् ।
कोपानलज्वलितहृत्कमलोऽथ वाली
रङ्गावतारमगमद्गिरिचत्वरेषु ॥ ९३ ॥

---

सुगमम् । एते भयभृतः आसन्नित्यन्वयः । तानाह । अश्वा रवेः सप्तगाः सप्तद्वीपाः । "गकारो गगनद्वीपगणेषु च गणेऽपि च ।" इति संसारावर्त्तशब्दशासनः ॥ ९१ ॥

रामकराद्विमुक्तो बाणः पुङ्खावशेषः सन् इति पक्षान्विधुनोति कम्पयति । इतीति किं भुजङ्गमः शेषस्तद्भङ्गभयेन अम्बरचरं ब्रह्माणं बोधयन्निव ॥ ९२ ॥

विनापराधं हननमेव पापं तद्युक्तहृदयेन परकान्तापहरणत्वं वानराणामभेदत्वात् । यद्वा । "पापोऽस्त्री क्रोधपङ्कयोः" इति विश्वात् क्रोधयुक्तहृदयेनेत्यर्थः ॥ ९३ ॥

तारा:—( सहर्षम् ) अवश्यं भगवतः श्रीपुरुषोत्तमस्य रामचन्द्रस्य प्रसादादद्य चिरविरहिणः प्राणवल्लभस्य सुग्रीवस्य वक्षःपीठे लुठिष्यामीति मन्यमाना गिरिवरशिखरमारुह्य रामपौरंदरिसमरमाकाङ्क्षती चिन्तयामास ।

तारा संत्यक्तहारा गिरिशिखरचरा स्रस्तधम्मिल्लभारा
शोकाब्धिप्राप्तपारार्पितमदनशरा वीरसुग्रीवदाराः ।
नारा नाराचधारा निजरमणरता तापिनः पापिनोऽस्य
प्राणाञ्छाणावतीर्णा हरतु कलिकलाशालिनो वालिनोद्य

रामः—(सक्षोभं पौरंदरिं गिरिगरिमगम्भीरमहिमानमवलोक्य सौमित्रिमित्रमनुस्मृत्याब्रवीत् । ) वत्स !

किं वाली वानरालीबहलकलकलाहूतदेवेन्द्रवज्रं वाञ्छत्याकृष्य योद्धुं शिव शिव तुमुलोत्कालसंचालितार्कः ।

---

तारेति ॥ चिन्तयामासेति पूर्वेणान्वयः । इति किम् अस्य वालिनः प्राणान् हरतु । कलिकला कलेरंशः पापं तेन राजमानस्य । किलेति पाठे वानरजात्यनुकरणं किलाकिलशब्दः । कीदृशी तारा स्रस्तः धम्मिल्लो केशबन्धनं यस्याः । नरो रामस्तस्यैषा नारा रामस्य बाणधारेत्यर्थः ॥ ५४ ॥

हे वत्स एषः वाली केनायुधेन योद्धव्यः । यद्वा । केन वीरेण योद्धव्यः न केनापीति ध्वनिः । एषः कः वानरपङ्क्तीनां बहलो यो कलकलः शब्दः तेन चाहूतो देवेन्द्रस्तस्य वज्रमाकृष्य आदाय योद्धुं वाञ्छति । शिव शिवेति खेदे । कीदृगयं तुमुलोऽन्यैरलक्ष्यः उत्कालः कदनं तेन संचालितोऽर्को येन । किंभूतं वज्रं प्रकर्षेणो-

प्रोद्यल्लाङ्गूलवल्लीशिखरकवलितं चण्डदोर्दण्डकाण्ड-
भ्रान्तामूलाग्रशैलप्रहरणनिपुणः केन योद्धव्य एषः ॥५५

( सावष्टम्भं नारायणं बाणमादाय )

वेदोद्भवैर्द्विजगणेन पुराभिषिक्तो
मूर्ध्ना समं त्वमपि बाणगुणेन मन्त्रैः ।
तत्तेजसा परवधूजनहारिणस्त्वं
प्राणान् गृहाण समरेष्वतिदारुणस्य ॥ ५६ ॥

रामबाणः पौरंदरिश्च ब्रह्मतेजोधिगम्य परदारा-
पहरणपराभवं च ।

अथ रघुपतिबाणः प्राप्तवीरप्रमाणः
प्रलयदहनरोचिः कोटिविद्युन्मरीचिः ।
अकृत हृदयभेदं वालिनः सोप्यरोदी-
दनिहतपितृशत्रुः किं सशल्यो हतोऽस्मि ॥ ५७ ॥

---

द्यन्ती या लाङ्गूलवल्ली तस्याः शिखरेणाग्रभागेन कवलितं गृही-तम् । किंभूतो वाली चण्डः अजेयः दोर्दण्डो भुजदण्डस्तस्मिन्न्यः कोदण्डो बाणः तेन भ्रान्तो गर्वितः दोर्दण्डस्थबाणेन जातगर्व इति। "गर्वसंशययोर्भ्रमः" इति विश्वः। मूलं चाग्रं शिखरं च मूला-ग्राभ्यां युतः शैलः मूलाग्रशैलस्तेन यत्प्रहरणं तत्र निपुणः ॥५५॥

हे बाण पुरा द्विजगणेन वेदोद्भवैर्मन्त्रैः गुणेन समं त्वं मूर्धाभि-षिक्तोऽसि अतस्तत्तेजसा तेषां मन्त्राणां तेजसा । सुगमम् ॥५६ ॥

अथेति ॥ प्राप्तवीरस्य वालिनः प्रकर्षेण मानमियत्ता येन सः न निहतः पितुरिन्द्रस्य शत्रुः रावणो येन सः अत एव सशल्यो रावणहननमेव शल्यम् ॥ ५७ ॥

रामः—( सकरुणं सविषादं च ) वत्स सौमित्रे ! गिरिगह्वरेषु स्वयोनिविहितं महत्सुखमनुभवन्तं महावीरम् अनपराधिनं वालिनं हत्वा मन्दभाग्यः कथमहं जानकीसुखमनुभविष्यामि इति शिरो धुन्वन् पौरंदरिं व्याजहार ।

शस्त्रौघप्रसरेण रावणिरसौ यो दुर्यशोभागिनं
चक्रे गौतमशापयन्त्रितभुजस्थेमानमाखण्डलम् ।
कक्षागर्तकुलीरतां गमयता वीर त्वया रावणं
तत्संमृष्टमहो विशल्यकरणी जागर्त्ति सत्पुत्रता ॥५८

वाली—( प्राणांस्त्यक्तुमिच्छन् )
सुग्रीवोऽपि क्षमः कर्तुं यत्कार्यं तव राघव ।
किमहं न क्षमः कस्मादपराधं विना हतः ॥ ५९ ॥

---

भोः कपे यः रावणापत्यं मेघनादः शस्त्रौघप्रसारेण शस्त्रव्राताडम्बरेण आखण्डलमिन्द्रं दुर्यशोभागिनं चक्रे रावणिना शक्रो जित इति दुर्यशः । हे वीर तत् इन्द्रगतं दुर्यशो त्वया संमृष्टम् उज्ज्वलीकृतं दूरीकृतमिति भावः । कथं दूरीकृतमित्यपेक्षायामाह । किं तेन त्वया रावणं मेघनादपितरं कक्षैव गर्त्तस्तत्र कुलीरतां कर्कटतां गमयता । कीदृशमिन्द्रं गौतमशापेन यन्त्रित बद्धः भुजस्थेमा भुजबलं यस्य तम् । "प्राणस्थेमातरः पराक्रमद्युम्नानि शौर्यौजसी" इति हैमः । ननु तातदुर्यशः संमृष्टं मम तु रावणाहननरूपं शल्यमस्त्येवेति चेन्न असौ सत्पुत्रभाववानङ्गदः जागर्ति जीवत्येव । कीदृशी विशल्यं कर्तुं शीलं यस्याः सा । अयमङ्गदो रावणं मत्सहायतया हनिष्यति एतेन त्वं विशल्यो भवेति भावः । रावणपुत्रेण

रामः—( सबाष्पम् )

शुद्धिर्भविष्यति पुरंदरनन्दन त्वं
मामेव चेदहह पातकिनं शयानम् ।
सौख्यार्थिनं निरपराधिनमाहनिष्य-
स्यस्मात्पुनर्जनकजाविरहोऽस्तु मा मे ॥ ६० ॥

पौरंदरिः—

तथेत्युक्त्वा पुनः स्वर्ग्यां गतिस्ते न भविष्यति ।
यावत्त्वां न हनिष्यामि स्थास्यसि त्वं यमालये॥६१॥

( इति प्राणान्मुमोच । )

हनूमान्—

दासैरहो रघुपतिः परिभूयते किं
वैवस्वतादिभिरुवास तदालयेऽपि ।
यो देववाक्यमनतिक्रमयन्कियन्तं
कालं निहत्य पुरुहूतसुतं तु देवः ॥ ६२ ॥

रामः—( कथंचिद्विषादं परित्यज्य पौरुषमवलम्ब्य )

राज्ये सुग्रीवमादौ सदयितमभिषिच्याङ्गदं यौवराज्ये
रामः सेनाधिपत्ये सपवनतनयान्वानरेन्द्रान्प्रतस्थे ।

---

त्वत्पित्रेन्द्रो बद्धः इन्द्रपुत्रेण त्वया रावणो बद्धः एतेन सादृश्यं जातम् । परंतु त्वत्सुतेन रावणहननात्तवातिशय इति भावः ॥५८॥५९॥

हे पुरंदरनन्दन चेत् यदि त्वं माम् आहनिष्यसि तदा मम शुद्धिः मनःप्रसत्तिर्भविष्यति अस्मात्त्वद्धननापराधात् पुनर्जनकजा-विरहो मास्तु शयानम् अन्तर्निष्ठत्वात् मीलिताक्षम् ॥६०॥६१॥६२॥

आदौ राज्ये किष्किन्धाद्रौ सुग्रीवं वानरराज्ये शङ्कां समुद्रं ती-

लङ्कां संत्यज्य शङ्कां तदनु कपिभटैर्माल्यवत्युत्तमाद्रौ ।
वर्षाकालं गमयितुमचिरान्मन्त्रिभिः संमतोऽभूत् ॥ ६३ ॥

रामापरः शूरतरो न कश्चित्
पराभवः स्त्रीहरणान्न चान्यः ।
तथापि नाब्धिं प्रविवेश रामो
बबन्ध सेतुं विजयासहिष्णुः ॥ ६४ ॥

अपि च ।

रामाद्बलीयान्न परोऽत्र कश्चिद्दारापहारान्न परोऽभिमानः ।
तथापि रामः शरदं प्रतीक्ष्य बध्वांबुधौ सेतुमरिं जगाम ६५

रामः—( तत्र जनकतनयाकमनीयतामनुस्मृत्य )

इन्दुर्लिप्त इवाञ्जनेन गलिता दृष्टिर्मृगीणामिव
प्रम्लानारुणमेव विद्रुमदलं श्यामेव हेमप्रभा ।
पारुष्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतस्तु हन्त शिखिनां बर्हाः सगर्हा इव ६६

( कादम्बिनीताण्डवाडम्बरं विलोक्य )

---

र्वा कथं स्यामिति भयं त्यक्त्वा लङ्कां प्रतस्थे । तदनु प्रस्थानघोषानन्तरं मन्त्रिभिः कपिभटैः वर्षाकालं गमयितुं संमतः अभूत् । वर्षाकालं गमयित्वा यास्याम इति निश्चितवान् । एतेन नीतिशास्त्रपराणां प्राधान्यं दर्शितम् ॥ ६३ ॥ ६४ ॥ ६५ ॥

प्रकर्षेण म्लानः अरुणः शोणत्वं यस्मिन् तं कलयापि सीतास्वरलेशेनापि । अत्र सर्वमङ्गसादृश्यम् । एतेन गुणकीर्त्तनावस्थोक्ता । सोक्ता रसोदधौ । " वैरहकान्ताविषयकमशंसनं स्यात् गुणाख्यानम् । " इति ॥ ६६ ॥

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्साहृश्यविनोदमात्रमपि मे दैवेन नः क्षम्यते ६७

इति श्रीहनुमन्नाटके वालिवधो नाम पञ्चमोऽङ्कः ॥ ५ ॥

## अथ षष्ठोऽङ्कः ।

रामः—( वानरभटानाचष्टे ) भो भो सुग्रीवसै-
निकाः शृणुत ।

व्यसने महति प्राप्ते स्थिरैः स्थातुं न युज्यते ।
लङ्कां निःशङ्कमालोक्य क इहागन्तुमर्हति ॥ १ ॥

हनुमान्—( सहर्षं दोःस्तम्भास्फालनकेलिमाभिनीय नि-
जप्रचण्डदोर्दण्डयोर्महतीं प्रौढिं नाटयति । ) देव पश्य ।

अष्टाङ्गुलमयः कायः पुच्छो मे द्वादशाङ्गुलः ।
बाहू मे पश्य भो नाथ कथं रत्नाकरं तरे ॥ २ ॥

---

यदिन्दीवरं त्वन्नेत्रसमानकान्ति तदपि सलिले मग्नम् । यः तव मुखच्छायानुकारी सोऽपि शशी मेघैरन्तरितः । राजहंसा अपि गताः वर्षाकाले कमलाभावात् । अन्यत् सुगमम् । प्रलापावस्थेयम् । सोक्त रसोदधौ।"कान्ताश्रितकालात्ययव्यवहारः स्यात् प्रलापोऽयम् ।"६७ ।

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकटी-
कायां वालिवधो नाम पञ्चमोऽङ्कः ॥ ५ ॥

स्थिरैर्योगिभिरपि किमुत गृहिभिः भवतां मध्ये कः आगन्तुमर्हतीति ॥ १ ॥ २ ॥

( रामचन्द्रः सविस्मयो बभूव । )

ततो जाम्बवान्—देव रुद्रावतारोऽयं मारुतिः ।
रुद्रस्तुतिः क्रियताम् ।

रामचन्द्रः—(रुद्रस्तुतिं कृत्वा) भो भो मारुते त्वया विहीनः कः कर्तुं समर्थोऽस्ति ।

तत्र हनूमान् महावीराद्भुतपराक्रमः—( सहर्षं वाक्यम् ) देवाकर्णय ।

कूर्मो मूलवदालवालवदपां नाथो लतावद्दिशो
मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दवः ।
स्वामिन् व्योमतरुर्मम क्रमतले श्रुत्वेति गां मारुतेः
सीतान्वेषणमादिशन्दिशतु वो रामः सहर्षः श्रियम् ॥ ३ ॥

देवाज्ञापय किं करोमि सहसा लङ्कामिहैवानये
जम्बूद्वीपमितो नये किमथवा वारांनिधिं शोषये ।
हेलोत्पाटितविन्ध्यमन्दरगिरिस्वर्णत्रिनेत्राचल-
क्षेपक्षुण्णविवर्तमानसलिलं बध्नामि वारांनिधिम् ॥ ४ ॥

---

हे स्वामिन् प्रभो अयं व्योमतरुः आकाशमेव वृक्षः मम क्रमतले अस्ति पादविन्यासोत्थापनात् नीचैरस्ति । तमेव वृक्षरूपत्वेन निरूपयति । कूर्मो मूलवदिति ॥ ३ ॥

मूलस्थानीयं जम्बूद्वीपं सागरान्तर्वर्तिदेशम् इतः सकाशात् तत्रैव लङ्कासमीप एव नये प्रापयामि । लङ्कापि जम्बूद्वीपान्तराल एवेत्युक्तार्थे एवपदम् । एवं व्याक्रियते जम्बूयुक्तो द्वीपः मध्यमपदलोपी समासः । द्वीपशब्देन लक्षणा । " शेषो जम्बूध्वजो द्वीपो परोऽव्ययस्वराट् " इति तन्त्रे जम्बूद्वीपलक्षणं शेषत्वात् स्वर्णाचलो मेरुः

अपि च।

देवाज्ञां देहि राज्ञां त्वमसि कुलगुरुः शोषये किं पयोधिं
किंवाऽलङ्का सलङ्काधिपतिमुपनये जानकीं मानकीर्णाम्।
सेतुं बध्नामि मत्तः स्फुटितगिरितटीभूतभङ्गात्तरङ्गा-
दुद्भ्राम्यन्नक्रचक्रक्रममकरकुलग्राहचीत्कारघोरम् ॥५॥
किं प्राकारविहारतोरणवतीं लङ्कामिहैवानये
किंवा सैन्यसमुद्धतं च सकलं तत्रैव संपादये।
हेलान्दोलितपर्वतोच्चशिखरैर्बध्नामि वारांनिधिं
देवाज्ञापय किं करोमि सकलं दोर्दण्डसाध्यं मम ॥ ६ ॥

---

त्रिनेत्राचलः कैलासः विन्ध्याद्रीनां क्षेपेण प्रक्षेपणेन क्षुण्णं खण्डितं विवर्तमानं प्रत्यागतम् अवरुन्धमानं सलिलं यस्य तं बध्नामि पर्वतैरेव स्थलीकरोमि ॥ ४ ॥

इत्युक्तेऽपि किं कारयामि इति विचिकित्समानः पुनरात्मबलमुक्तार्थानुवादेनैव स्मारयति—देवाज्ञामिति द्वाभ्याम् ॥ अलङ्का लङ्केव नास्तीत्येवं चूर्णीकरोमीति शेषः। अथवा मानकीर्णां पातिव्रत्योन्नतिमतीं जानकीमुपनये। सेतुं बध्नामि। किंभूतं सेतुं मत्तः सकाशात् स्फुटिता ये गिरयः तेषां तटीभिः भूतानां भङ्गो यत्र तस्मात्तरङ्गादुच्चैः भ्रमन्तो ये नक्रास्तेषां चक्राणां समूहानां क्रमादुत्फालमकरग्रहग्राहचीत्कारैश्च घोरम्। "नक्राः सपक्षजातीया मकराः स्युश्चतुष्पदाः। एतद्भिन्ना ग्रहा ग्राहास्तद्भिन्नाः समुदीरिताः॥" इति वैद्यके। यद्वा। किंविशिष्टात् मत्तः स्फुटिता ये गिरयस्तेषां तटीभिर्ये भूतभङ्गाः प्राणिनाशास्तैरात्तः स्वीकृतो रङ्गो येन तस्मात् ॥ ५ ॥

सैन्येन सह समुद्धृतं तत्रैव लङ्कायां सैन्येन सह सम्यगुद्धृतं सर्वं सम्पादये व्यापादये हन्मि। सकलं पर्वतादिकम्। सुगमम्॥६॥

रामः–( सत्वरं करमुद्रां समुद्धृत्य ) वीर मारुते ।
मुद्रां समुद्रमुल्लङ्घ्य शीघ्रमाश्वास्य जानकीम् ।
विन्यस्य पुरतस्तस्या आगच्छ मयि जीवति॥ ७ ॥

हनुमान्–( तथेति श्रीरामसुग्रीवौ प्रणम्य समादाय मुद्रां समुद्रोपकण्ठं पीठावतारमासाद्य सद्योऽचिन्तयत् । )

एते ते दुरतिक्रमाः क्रममिलद्घूर्णोर्मिमर्मच्छिदः
कादम्बेन रजोभरेण ककुभो रुन्धन्ति झञ्झानिलाः।
गाढाम्रेडनरूढनीरदघटासंघट्टनीलीभव-
द्व्योमास्फोटकटाहनिर्झरपयोवेणीकणग्राहिणः ॥८॥

( धैर्यमवलम्ब्योद्यल्लाङ्गूलास्फालकेलिव्याकुलीकृताम्बरचरः सज्जो बभूव । )

रामः शीघ्रं रावणं हत्वा नेष्यतीति वचसाश्वास्य तस्याः पुरतो मुद्रां विन्यस्य मयि जीवतीति ॥ ७ ॥

एते झञ्झानिलाः झञ्झानामानो वायवः कदम्बसंबन्धिना रजोभरेण ककुभो रुन्धन्त्याच्छादयन्ति। किंभूताः दुरतिक्रमाः दुर्लङ्घ्याश्च ते क्रमेणैव मिलन्त एकीभवन्तश्च ते घूर्णोर्मयश्च घूर्णायमानतरङ्गास्तैरेव लोकानां मर्माणि छिन्दन्ति इति । पुनः कीदृशा गाढाम्रेडने वातातिशयमेलनेन रूढा प्रवृद्धा या नीरदघटा तस्याः संघट्टनेन संयोगेन नीलीभवत् श्यामीभूतं यद्व्योम तस्मिन्स्फोटनं तद्युक्तश्चासौ कटाहश्च कटाहो ब्रह्माण्डकटाहः तस्माद्यन्निर्झरत्पयः गङ्गा तस्या या वेणीप्रवाहस्तस्मादम्बुकणान् ग्रहीतुं शीलं येषां ते । “ आम्रेडनोक्तियोगोस्त्री ” इति विश्वः ॥ ८ ॥

अथ सविलसदम्भःस्तम्भिताक्षिप्रकाशं
जलचरखरलेखास्फालवाचालिताशम् ।
जलनिधिमधिवीरोल्लङ्घितुं जाङ्घिकत्वं
खगपतिरिव चण्डोड्डीनमङ्गीचकार ॥ ९ ॥

लाङ्गूलोत्तालकेतुर्नभसि पृथुगतिः स्फारसीमन्तिताभ्रः
स्फूर्जत्प्रौढोरुवेगोल्ललितजलनिधिः पृष्ठकृष्टोग्रसत्त्वः ।
दूरात्सिन्दूरपूरारुणमरुणरुचिस्तेजसः संविभागै-
श्चक्रे दिग्वारणानां कटितटमभितः सूर्यविद्धाम्बुदाभम्॥

उद्यल्लाङ्गूलेति॥अथ दुर्गतिक्रमणविचारानन्तरं स हनूमान् जलनिधिं लङ्घयितुं जाङ्घिकत्वमङ्गीचकारेत्यन्वयः । "जङ्घालोऽतिजवो जङ्घाकारिको जाङ्घिको जवी ।" इति चरकः । कः किमिव खगपतिर्गरुडः चण्डोड्डीनामिव । कीदृशं जलनिधिं विलसिताम्भःस्तम्भितः नेत्रप्रकाशो येन तं जलचराणां मत्स्यादीनां खरा तीक्ष्णा निरन्तरा या लेखा क्रीडनं तत्र ये आस्फाला उत्पातास्तैर्वाचालिताः मुखरीकृताः आशाः दिशाः येन तम् ॥ ९ ॥

हनुमानिति शेषः । सिन्दूरपूरारुणं दिग्वारणानां कटितटमभितः सर्वतस्तेजसः संविभागैः स्वाङ्गदीप्तिसंचारणैः सूर्यविद्धाम्बुदाभं सूर्येण विद्धस्यालिङ्गितस्याम्बुदस्येवाभा यस्य तादृशं चक्रे । यथा लग्नरविकरा मेघा दृश्यन्ते तथा दूरादेव लग्नाङ्गदीप्तयः दिग्वारणा अभवन्नित्यर्थः । सूर्यसादृश्ये हेतुमाह । अरुणरुचिः वानरजातित्वात् । यद्वा । समुद्रोल्लङ्घनाविष्कृतरोषावेशाच्च अरुणा रुचिर्यस्य । रोषमेव द्योतयति।लाङ्गूलमेवोत्तालः केतुर्यस्य।नभसि या पृथुगतिः शीघ्रगमनं तदर्थं यः स्फार उत्पतनं तेन सीमान्तितानि द्विधाभूतानि अभ्राणि येन : "अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः।" इत्यमरः । स्फूर्जत् निर्गच्छत् यः प्रौढोऽतिबहु ऊरुवेगः जङ्घाजव-

( तत्रावसरे समुद्रादुत्थितो मैनाकः )

विश्रान्तस्तत्र हर्षात्सपदि जलधिना प्रेरितो रत्ननाभो
मैनाकः काञ्चनाङ्गस्तुहिनगिरिसुतः प्राह दूरागतस्त्वम्।
हंहो दूराध्वखेदं जहि मम शिखरे प्राप्य तस्येति वाचं
स्पृष्ट्वाङ्गुल्या तदग्रं भुजरयपवनापूरिताशं जगाम॥११॥

वेलातटे शालतमालमालां
विलोक्यमानः सहसाञ्जनेयः।
उल्लोलयन् वालधिवल्लिमुच्चैः
कल्लोलिनीवल्लभमुल्ललङ्घे॥ १२॥

अथ दशरथसूनोराज्ञया वायुपुत्रो
रजनिचरपुरीमालोक्य भूत्वा द्विदंशः।

---

स्तेन उल्ललितः जलनिधिर्येन सः। पृष्ठेनाकृष्टानि उग्राणि राक्षसादीनि सत्त्वानि येन सः। समुद्रलङ्घने राक्षसयुद्धं प्रसिद्धम्॥ १०॥

मैनाको गिरिः कपिं प्राह। हंहो संबोधनेऽव्ययम्। हे हनुमन् त्वं दूरादागतः अतो मम शिखरे दूराध्वखेदं जहीत्यन्वयः। तस्य गिरेरिति वाचं प्राप्य श्रुत्वा अङ्गुल्या चरणाङ्गुल्या तदग्रं तच्छिखराग्रं स्पृष्ट्वा भुजरयपवनेनापूरिता आशाः येनैवं यथा स्यात्तथा जगाम। कीदृशो मैनाकः जलनिधिना सपदि हर्षात् मत्कर्तृसगरगोत्रापत्यरामसहायकृदयमिति प्रीत्या प्रेरितः। ननु कुतस्तत्र गिरिरित्यपेक्षायामाह। कीदृशो गिरिः विश्रान्तः पक्षच्छिदो गोत्रभिदः भयात् निलीय स्थितः। अन्यत्सुगमम्॥ ११॥

आञ्जनेयः अञ्जनीपुत्रः हनूमान् सहसा अनायासेन कल्लोलिनीवल्लभं समुद्रमुल्ललङ्घे लङ्घितवान्। वालधिः पुच्छं तदेव वल्ली तामुल्लोलयन् उच्चैश्चालयन्॥ १२॥

अल्पो भूत्वा लङ्कां प्रविशेति रामाज्ञया द्विदंशप्रमाणदेहः। "द्वि-

अकलितपरिमाणो मात्रया सत्रपस्तां
क्षिपति जनकजाग्रे शिंशुपाग्रावतीर्णः ॥ १३ ॥

मारुतिः–( जानकीं नमस्कृत्य )

मातर्जानकि को भवानिह मृगः केनात्र संप्रेषित-
स्त्वद्दौत्येन रघूत्तमेन किमिदं हस्तेऽस्ति तन्मुद्रिका ।
दत्ता तेन तवैव तां निजकरादालभ्य चालिङ्ग्य च
प्रेम्णाश्रूणि ससर्ज सम्यगुदभूद्गात्रेषु रोमोद्गमः ॥ १४ ॥

हनुमान्–( अविरलगलदश्रुपूर्णलोचनाभ्यां सौवर्णमङ्गुली-
यकं मन्यमानां जानकीं संभावयामास ) हे भामिनि ।
सुवर्णस्य सुवर्णस्य सुवर्णस्य च मैथिलि ।
प्रेषितं रामचन्द्रेण सुवर्णस्याङ्गुलीयकम् ॥ १५ ॥

---

दंशो वनमाक्षिका " इति विश्वः । मात्रया परिमितदेहेन शिंशुपाग्रात् अशोकाग्रादवतीर्णः । " समौ स्तः शिंशुपाशोकौ " इति निघण्टुः ॥ १३ ॥

मुद्रादानप्रकारमाह । अत्राप्युक्तिप्रत्युक्तिः । हनूमान्–मातः जानकि ! सीता–भवान् कः ? हनूमान्–मृगः वानरः । सीता–अत्र केन संप्रेषितोऽसि ? हनूमान्–रघूत्तमेन त्वद्दौत्यनिमित्तम् । सीता–इदं हस्ते किम् ? हनुमान्–तन्मुद्रिका सीते तेन तुभ्यं दत्ता । तवैव दत्तेति परस्परमुक्त्वा सीता तां मुद्रिकां निजकरादालभ्य गृहीत्वा आलिङ्ग्य स्वहृदये विन्यस्य प्रेम्णाश्रूणि ससर्ज । सम्यक् स्पृष्टं यथा स्यात्तथा गात्रेषु रोमोद्गमोऽभूदिति ॥ १४ ॥

हे भामिनि भ्रमवति " भामोऽस्ति भ्रमकोपयोः " इति चरकः । इदं सुवर्णस्य हेम्नः अङ्गुलीयकं रामेण तव तुभ्यं प्रेरितं प्रस्थापितम् । किंभूतस्य सुवर्णस्य शोभनपीतरक्तरङ्गवतः । पुनः किंभूत-

जानकी–( आश्लेषमासाद्य क्षणमश्रूणि प्रमृज्य )

मुद्रे सन्ति सलक्ष्मणाः कुशलिनः श्रीरामपादाः सुखं
सन्ति स्वामिनि मा विधेहि विधुरं चेतोऽनया चिन्तया ।
एनां व्याहर मैथिलाधिपसुते नामान्तरेणाधुना
रामस्त्वद्विरहेण कङ्कणपदं ह्यस्यै चिरं दत्तवान् ॥ १६ ॥

अत्राङ्गुलीयकमणौ प्रतिबिम्बमासी-
द्रामस्य सादरमतीव विलोकयन्ती ।
मद्रूप एव किमभून्मम वीक्षयेति
मीमांसया जनकराजसुता मुमोह ॥ १७ ॥

---

स्य सुवर्णस्य शोभनरामाक्षरवतः । पुनः सुवर्णस्य दशमाषमात्र-स्य । " सुवर्णं दशमाषकम् " इति ॥ १५ ॥

परपुरुषसंभाषणात्पातिव्रत्यभङ्गभयान्मुद्रिकामुपन्यस्य पृच्छति–मुद्रे इति ॥ रामः अस्यै मुद्रायै चिरं त्वद्विरहेण कङ्कणपदं कङ्कण-स्थानं दत्तवान् एतेन व्याधिर्दर्शितः । उक्तं च रसोदधौ । " व्या-धिः स्मरवेदनया समुत्थसंतापदोषकृतः कृशिमा ॥ " इति सुग-मम् ॥ १६ ॥

अत्र अङ्गुलीयकमणौ सादरं यथा स्यात्तथा अतीव । रामस्येति कर्मणि षष्ठी । रामं रामनामाक्षरं विलोकयन्ती सीता प्रतिबिम्बम् आसीत् । मणौ प्रतिबिम्बिता बभूवेत्यर्थः । यद्वा । अत्र भ्रमः अत्र मणौ रामस्य प्रतिबिम्बमासीत्तदस्ति नवेति परीक्षया विलोकयन्ती स्वप्रतिबिम्बं तत्र सा दृष्ट्वा विचिकित्सति मद्रूप इति । रामोऽपि मच्चिन्तया मद्रूप एवाभूत् किमिति मीमांसया विचारेण मुमोह वैचित्यमाप ॥ १७ ॥

( कथंचिच्चेतनां प्राप्य )

अये मरुत्तनय यद्यङ्गुलीकमेव कङ्कणमभूत्स्वामिनो रामदेवस्य तर्हि किमिव तनुतां गतः ?

हनुमान्—

स्वभावादेव तन्वङ्गि त्वद्वियोगाद्विशेषतः ।
प्रतिपत्पाठशीलस्य विद्येव तनुतां गतः ॥ १८ ॥

जानकी—

चन्द्रो यत्र दिनेशदीधितिसमः पद्मं स्फुलिङ्गोपमं
कर्पूरः कुलिशोपमः शशिकला शम्पासमा भासते ।
वायुर्वाडववह्निवन्मलयजो दावाग्निवत्साम्प्रतं
संदेशं नय रामसन्निधिमितो यात्रां द्रुतं कारय ॥ १९ ॥

हनुमान्—

किं दूरमिन्दुमुखि रामशिलीमुखानां
किं दुर्गमर्गलभिदां हरियूथपानाम् ।
दैवं प्रसन्नमिव देवि तवाद्य सत्यं
रक्षांसि कानि कुपितस्य सलक्ष्मणस्य ॥ २० ॥

---

हे तन्वङ्गि स्वभावादेव तनुतां गतः त्वद्वियोगाद्विशेषत इत्यन्वयः । तन्वङ्गीति वा पाठः । तनून्यङ्गानि यस्यासौ रामः स्वभावादेव त्वद्वियोगाद्विशेषतस्तनुतां गत इति योज्यम् । तन्वङ्गी इन्नन्तः ॥ १८ ॥

चन्द्रेति ॥ शम्पा विद्युत् । कारयेति स्वार्थे णिच् । कुर्वित्यर्थः । तत्र गत्वा यात्रां रामप्रस्थानं कारयेत्यर्थः ॥ १९ ॥

ननु समुद्रान्तरितरक्षोगृहमागताहं दूरस्थो राम इति मीमांस-

( अत्रान्तरे जानकीं सप्रश्रं पृच्छन् )

हनुमान्—मातः कुत्रास्ते राजवाटिका ?

जानकी—( दर्शयति ) रे पुत्र पश्चिमदिग्भागेनास्यास्ति वाटिका ।

( हनूमान् उद्यल्लाङ्गूलप्रचण्डरूपेण प्रचलितः । )

इत्युक्तो रजनीचरस्य हनुमानुद्भिद्य लीलावनं
वीरं तत्सुतमक्षमात्तपरिघाघातैर्जघानागतम् ।
तत्कोपारुणलोचनेन्द्रजयिना प्राङ्निष्फलत्वाद्धृतं
ब्रह्मास्त्रेण विगर्हितेन विधिना बद्धो विदग्धः कपिः॥२१॥

रावणः—( तमालोक्य )

रे रे वानर को भवानहमरे त्वत्सूनुहन्ताहवे
दूतोऽहं खरखण्डनस्य जगतां कोदण्डदीक्षागुरोः ।

मानां सम्बोधयति । अर्गलानि प्रकारादीनि भिन्दन्तीत्यर्गलाभिदस्तेषाम् । शेषं सुगमम् ॥ २० ॥

उद्भिद्य उत्पाट्य तत्सुतं रावणपुत्रम् अक्षनामानं वनभङ्गं श्रुत्वा योद्धुमागतं तस्मिन् हनूमति यः कोपस्तेनारुणे लोचने यस्य तेनेन्द्रजयिना मेघनादेन कृत्वा प्राङ्निष्फलत्वाद्विगर्हितेन विधिना ब्रह्मणा हेतुभूतेन ब्रह्मणा ब्रह्मास्त्रेण ब्रह्मदत्तपाशेन बद्धः । अत्रेयं कथा। पूर्वं ब्रह्मणा दत्तो ब्रह्मपाशः एतेन त्वं कपिं बध्नीहीति रुद्रावतारे हनूमति पाशो निष्फलो जातः। ततो मेघनादेन ब्रह्मणो गर्हा कृता । ततश्च ब्रह्मणा प्रार्थितो हनूमान् स्वयं निबद्धः । विदग्धः ब्रह्मसंकटात्मदहननिवारणविधिज्ञः ॥ २१ ॥

रे रे वानर भवान् कः ? हे रावण अहम् आहवे त्वत्सूनुहन्ता

मद्दोर्दण्डकठोरताडनविधौ को वा त्रिकूटाचलः
को मेरुः क्व च रावणस्य गणना कोटिस्तु कीटायते २२
ईषत्सज्जनमैत्रीव नाभिद्यत कपेस्तनुः ।
निहता चन्द्रहासेन रावणेनातिरंहसा ॥ २३ ॥
लाङ्गूले चैलतैलप्लुतबहलशणैर्वेष्टिते दीप्यमानो
रक्षोभिर्वीक्षितोऽग्निर्द्विजवरूपगिरा राघवो यद्यतुष्टः ।
तुष्टो यद्याज्यहोमैस्त्वमपि रघुपतेर्यद्यहं भक्तियुक्ता
संतप्तः प्रार्थितोमा तदिह हनुमतः सीतया शीतलोभूत् ॥
वह्निर्बभौ वानरपुच्छजन्मा
स दह्य लङ्कां खमिवोत्पतिष्णुः ।

---

अक्षघाती । अनेन स्वतो बलम् उपदिश्य स्वामिनोप्यात्मनो बलं द्योतयति । खरखण्डनस्येत्युपलक्षणं खरदूषणत्रिशिरसां त्वङ्गातृणां खण्डनस्य हन्तुः रामस्य दूतः । किंभूतस्य रामस्य जगतां विश्वस्य या कोदण्डदीक्षा धनुर्विद्याशिक्षणं तस्य गुरोः शिक्षकस्य मद्दोर्दण्डाभ्यां यत्कठोरताडनं तस्य विधौ सति मयि प्रहरति सति त्रिकूटादयः के । न केपीत्यर्थः ॥ २२ ॥

ईषदपि नोऽभिद्यत् चन्द्रहासाख्यखड्गेन तत्राप्यतिरंहसा अतिबलेन ॥ २३ ॥

खड्गे निष्फले आत्मनः पूर्वोक्तवैदग्ध्यमाविष्कर्तुं मां दहेति शिक्षितो रावणः दाहयति सीतया इति प्रार्थितोऽग्निर्हनूमतः शीतलोऽभूत् न परेषामिति । इति किं भो अग्ने यदि संतुष्ट इत्यादि सुगमम् । हनूमतः संतप्तो मा भवेति शेषः । तत् तदा यदि तुष्टोऽसि । कीदृशः अग्निः चैलादीप्यति लाङ्गूले सति दीपितः । सुगमम् ॥ २४ ॥

ां विदह्य बभौ । कीदृशः खम् उत्पतिष्णुः उर्ध्वग-

रामाद्भयं प्राप्य किल प्रतापः
पलायमानो दशकन्धरस्य ॥ २५ ॥
पलानि भुक्त्वा चपलः पलाशिनां
हुताशनस्तृप्तिमुपागतः पराम् ।
विराजते स्म प्रतियातनाच्छला-
ज्जलानि चाब्धौ तृषितः पिबन्निव ॥ २६ ॥

रावणः—( स्वगतम् ) यद्ययं रुद्रो मारुतिस्तर्हि किमिति रुद्रभक्तस्य मे नगरीं दहति ? अहह ज्ञातम् ।

तुष्टः पिनाकी दशभिः शिरोभि-
स्तुष्टो न चैको दशमो हि रुद्रः ।
अतो हनूमान् दहतीति कोपात्
पङ्क्तेर्हि भेदो न पुनः शिवाय ॥ २७ ॥

अपि च ।

अब्धिः किं वडवानलेन तरणेर्बिम्बेन किं चाम्बरं
मेघः किं चपलाचयेन शशिभृत्किं भालनेत्रेण वा ।

---

न्तुकः । क इव खं प्रति पलायमानदशकन्धरप्रताप इव ॥ २५ ॥

पलाशिनां रक्षसां पलानि मांसानि । चपलः शीघ्रदाहकः प्रतियातनः प्रतिबिम्बस्तन्मिषेण ॥ २६ ॥

हि यतः पङ्क्तेर्भेदः भेदनं शिवाय मङ्गलाय न भवति । सुगमम् २७॥

सः प्रसिद्धः कपिः पुच्छेन खे राजते। तत्र कविरुत्प्रेक्षते । केन क इव । सर्वं सुगमम् । पुनर्मेघग्रहणं धनुरुत्प्रेक्षार्थम् । अलंकार-

कालः किं क्षयवह्निनेन्द्रधनुषा धाराधरः किं महान्
मेरुः किं ध्रुवमण्डलेन स कपिः पुच्छेन खे राजते॥२८॥

अथ राक्षसाः—

मरुत्पुत्रस्त्वेकः कपिकटकरक्षामणिरसौ
समुद्यल्लाङ्गूलो ध्वज इव समाश्लिष्टगगनः।
पुनः प्रत्यायास्यत्यहह कपिसैन्ये प्रचलिते
पदं प्रोचुर्नीचैर्भयचकितलङ्कापुरजनाः॥२९॥

अथाह गगनमण्डलस्थो मारुतिः—

एकोऽहं पवनात्मजो दशमुख त्वं चापि कोटीश्वर-
स्त्वां जित्वा समरे प्रभोः प्रणयिनीं सीतां च नेतुं क्षमः।
किं तूत्थाय भुजं पुरा भगवता रामेण सुग्रीवतो
हत्वा दक्षिणपाणिना वसुमतीं त्वां हन्तुमुक्तं वचः॥३०॥

---

दूषितमिदं पद्यम्। तदुक्तं दण्डिना। "असंबद्धोपमं पद्यं न कुर्वीत विदूषितम्।" इति॥२८॥

लङ्कापुरवासिनो राक्षसाः नीचैर्मन्दमन्दमिति प्रोचुः। इतीति शेषः। इति किम्। अहहेति कष्टम्। ततः कपिसैन्ये प्रचलति सति मरुत्पुत्रो हनूमान् पुनः पदमस्मदीयं स्थानं लङ्कां प्रत्यायास्यति आगमिष्यति। यद्वा। पदं वचनम्। कीदृशः। एक एवासौ कपिकटकरक्षामणिः। यद्वा। एकोऽसहायः असौ मरुत्पुत्रः पुनरायास्यतीति योज्यम्। पुनः समुद्यल्लाङ्गूल ऊर्ध्वगतपुच्छः। क इव पुच्छः समाश्लिष्टगगनध्वज इव॥२९॥

पूर्वार्धं सुगमम्। शक्तश्चेत्कथं मां न हन्याः सीतां च न नयसीत्यत्राह। पुरा रामेण सुग्रीवतः सुग्रीवाग्रे सुग्रीवं प्रति वा। सार्वविभक्तिकस्तसिल्। त्वां हन्तुं वचनमुक्तं यत्तद्वचोऽनृतं स्यादतो न हन्मीति भावः॥३०॥

( इत्युक्त्वा दशग्रीवनगरीं भस्मसात्कृत्वा रक्षितामशो-
कवनिकामागम्य जानकीं प्रणम्य रामाभिज्ञानं याचते
स्म हनूमान् । )

मैथिली—

शिखां धूमशिखां शत्रोः कालव्यालवधूमिव ।
उद्यम्यास्य शिरोरत्नं संज्ञानं स्वामिनं ददौ ॥ ३१ ॥

तथा च चित्रकूटपर्वते ।

वक्षोभिचारि चरुभाण्डमिव स्तनं यो
देव्या विदेहदुहितुर्विददार काकः ।
ऐषीकमस्त्रमधिकृत्य तदा ततोऽक्ष्णा
काणीचकार करुणो रघुराजपुत्रः ॥ ३२ ॥

इति द्वितीयमभिज्ञानम् ।

मनःशिलायास्तिलकं तथा मे
गण्डस्थले पाणितलेन मृष्टम् ।

---

अन्यत् स्पष्टम् । रक्षितामग्निनाऽदग्धां शिखां वेणीमुद्यस्य । की-
दृशीम् । धूमशिखां धूमस्येव शिखा यस्यास्ताम् । मध्यमपदलोपी
समासः । रावणदाहार्थं मलयाग्निधूमशिखामिवेत्यर्थः । यद्वा । धूम-
स्य धूमकेतोरिव शिखामिव कालसर्पस्य स्त्रियमिव ॥ ३१ ॥

यदा चित्रकूटे यः काकः काकरूपधरश्चेन्द्रः वक्षोभिचारि यथा
स्यात्तथा वक्षसि अभिचरतीति वक्षोभिचारि देव्याः स्तनं विददार ।
तदा च रामो रघुराजपुत्रः ऐषीकं बाणमधिकृत्य तं काक-
मक्ष्णा नेत्रेण काणीचकारेति । किमिव । चरुभाण्डमिव हविः-
पात्रमिव ॥ ३२ ॥

हे राघव अहं त्वदागमनाय मासमात्रं कालं जीवामी-

स्मरेति संज्ञानमपि प्रयच्छ
जीवाम्यतो राघव मासमात्रम् ॥ ३३ ॥
इति तृतीयमभिज्ञानम्।

हनूमान्—
रत्नं यत्नाद्गृहीत्वा तदनु कपिभटश्चित्रकूटस्य संज्ञां
नत्वा पादारविन्दद्वयमपि जनकस्यात्मजाया हनूमान्।
पाणिभ्यामङ्घ्रियुग्मं पुनरुदधितटे मन्त्रयित्वाभ्रगर्भे-
णोर्म्यामुत्पत्य मग्नं तदुरुभुजबलाडम्बरेणाजगाम॥३४॥

ततो मरुच्चुम्बितचारुकेसरः
प्रसन्नताराधिपमण्डलाग्रणीः।
वियुक्तरामातुरदृष्टिवीक्षितः
समागतः श्रीहनुमान्वसन्तवत् ॥ ३५ ॥

त्यापि वाच्यमिति शेषः। अन्यत् सुगमम् ॥ ३३ ॥

पाणिभ्यामङ्घ्रियुग्मं पुनः उदधितटे मन्त्रयित्वा अभ्राणि गर्भे यस्य तेनाकाशमार्गेण जगामेत्यन्वयः। किं कृत्वा। ऊर्म्यां समुद्रोर्मिंनभिव्याप्य तन्मानं समुद्रप्रमाणमुत्पत्य समुद्रोर्मिप्रमाणमात्रमुत्पत्येत्यर्थः। किंविशिष्टेनाभ्रमार्गेण। उरुभुजबलस्याडम्बरो यस्मिन्। अन्यत् सुगमम् ॥ ३४ ॥

अत्र हनूमद्वसन्तयोर्वर्णनम्। मरुच्चुम्बितचारुकेसरः चारुकेसराः पुच्छलोमानि कुसुमकोशतन्तवो वा। ताराधिपः सुग्रीवश्चन्द्रोऽपि वियुक्तो रामस्तस्यातुरदृष्ट्या वियुक्ता वियोगिन्यो रामास्तासामप्यातुरदृष्टचेति योज्यम् ॥ ३५ ॥

(सीतापतिं ससंभ्रममालिङ्गितुमुद्यतं दृष्ट्वा) देव ।

पीतो नाम्बुनिधिर्न कोणपपुरी निष्पिष्य चूर्णीकृता
नानीतानि शिरांसि राक्षसपतेर्नानायि सीता मया ।
आश्लेषार्पणपारितोषिकमहं नार्हामि वार्ताहरो
जल्पन्नित्यनिलात्मजः स जयति व्रीडाजडो राघवे ३६॥

रामः—(सविकल्पं विधातारमुपलम्भते) क्रूरकर्मा
विधाता किं विधास्यतीति ।

हनूमान्—देव ।

कुत्रायोध्या क्व रामो दशरथवचनाद्दण्डकारण्यमागात्
कोऽसौ मारीचनामा कनकमयमृगः कुत्र सीतापहारः ।
सुग्रीवे राममैत्री क्व जनकतनयान्वेषणे प्रेषितोऽहं
योऽर्थोऽसंभावनीयस्तमपि घटयति क्रूरकर्मा

रामः—हे वीर विदीर्यमाणहृदयद्वारेण प्राणा लोकान्तरं गन्तुमिच्छन्ति किमिति तूर्णं चन्द्रवदनां नावेदयसि ?

हनूमान्—(सत्वरम्)

हा राम जगदानन्द किमिदं शिवमस्तु ते ।
तव प्राणगतिद्वारस्यार्गलेयं करे मम ॥ ३८ ॥

---

आलिङ्गनार्पणमेव पारितोषिकप्रतिदानं तं प्रति नार्हामि न योग्योऽस्मीति । कुत इत्यत आह । यतो वार्ताहरः संदेशमात्रहारक इति जल्पन् अनिलात्मजो विजयते ॥ ३६ ॥

स रामः सविकल्पमिति स्पष्टार्थम् । एतेनैवमुक्तं भवति । अघटितघटनाचातुर्यशाली विधाता सीतामपि मेलयिष्यतीति भावः । "क्रूरादये विचित्रे च" इति धरणिः । विचित्रकर्मा ॥ ३७ ॥

जगतामानन्दो यस्मात्किमियं विमनस्कतेति पाठः ॥ ३८ ॥

( इति जानकीशिरोरत्नं रामाय प्रयच्छति । )

तथा च ।

मनःशिलायास्तिलकं स्मर गण्डस्थले त्वया ।
संमृष्टं जानकीवक्षःस्पर्शात्काणीकृतं खगम् ॥ ३९ ॥

रामः—( अभिज्ञानत्रयमासाद्य ) साधु मारुते साधु ।
अये प्रियायाः कुशलमस्ति ?

आञ्जनेयः—

कार्श्यं चेत्प्रतिपत्कला हिमनिधेः स्थूलाथ चेत्पाण्डिमा
नीला एव मृणालिका यदि घना बाष्पाः कियान्वारिधिः।
संतापो यदि शीतलो हुतवहस्तस्याः कियद्वर्ण्यते
राम त्वत्स्मृतिमात्रमेव हृदये लावण्यशेषं वपुः ॥ ४० ॥

रामः—मारुते का कथा ?

हनूमान्—भोः प्रभो ।

का शृङ्गारकथा कुतूहलकथा गीतादिविद्याकथा
माद्यत्कुम्भिकथा तुरङ्गमकथा कोदण्डदीक्षाकथा ।

---

सर्वं सुगमम् ॥ ३९ ॥

- हे राम यदि तस्याः कार्श्यं वर्ण्यते तर्हि हिमनिधेश्चन्द्रस्य प्रतिपत्कला स्थूला चेत्पाण्डिमा पाण्डुता । अथ पाण्डिमा वर्ण्यते चेन्मृणालिका नीला एव । यदि घना निरन्तराः बाष्पा वर्ण्यन्ते तर्हि वारिधिः कियान् । यद्वा । बाष्पा वर्ण्यन्ते तदा घना वर्षन्तो मेघाः तथा वारिधिरपि कियान् । अन्यद्वृत्तं कियद्वर्ण्यते । हृदयं त्वत्स्मृतिमात्रमेव वपुर्लावण्यशेषमेव ॥ ४० ॥

मिथः शृङ्गारकथा का एवमुत्तरत्रापि ज्ञेयम् । एवंविधनिकृष्टे

एकैवास्ति मिथः पलायनकथा त्वद्भीतरक्षःपते-
र्देव श्रीरघुनाथ तस्य नगरे स्वप्नेऽपि नान्या कथा॥४१॥

रामः—त्रिदशैरपि दुर्धर्षा लङ्का नाम महापुरी ।
कथं वीर त्वया दग्धा विद्यमाने दशानने ॥४२॥

हनूमान्—
निःश्वासेनैव सीताया राजन्कोपानलेन ते ।
दग्धपूर्वा तु सा लङ्का निमित्तमभवत्कपिः ॥ ४३ ॥
शाखामृगस्य शाखायाः शाखां गन्तुं पराक्रमः ।
यत्पुनर्लङ्घितोऽम्भोधिः प्रभावोऽयं प्रभो तव ॥४४॥

( अत्रान्तराले लङ्कायां सरमा नाम राक्षसी धर्मिणी जानकीं वाचमुचे । )

सरमा—बिभेमि सखि संवीक्ष्य भ्रमरीभूतकीटकम् ।
तद्ध्यानादागते पुंस्त्वे तेन सार्धं कुतो रतिः४५
मा कुरुष्वात्र संदेहं रामे दशरथात्मजे ।
त्वद्ध्यानादागते स्त्रीत्वे विपरीतास्तु ते रतिः४६

इति श्रीहनुमन्नाटके हनुमद्विजयो नाम षष्ठोऽङ्कः ॥ ६ ॥

---

पूर्वोत्तरपक्षे स्थापनात्मकं वाक्यमुक्तम् ॥ ४१ ॥ ४२ ॥

पूर्वं दग्धा दग्धपूर्वा कपिरहं निमित्तमेवाभवम् ॥ ४३ ॥ ४४ ॥

अभ्रमरो भ्रमरो भवति भ्रमरीभूतं कीटकं वीक्ष्य एवं तद्ध्यानात्तस्य रामस्य स्मरणात्त्वयि पुंस्त्वमागते सति तेन रामेण सार्धं रतिः कुतः । पुंस्त्वमत्र रामत्वम् ॥ ४५ ॥

अत्र रतौ । शेषं सुगमम् ॥ ४६ ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकायां टीकायां षष्ठोऽङ्कः समाप्तः ॥ ६ ॥

# अथ सप्तमोऽङ्कः ।

रामदूतेनोक्तः सुग्रीवः—

कपिनृपतिरपास्य प्रेयसीं प्रेमभिन्नः
 किमिति जनकपुत्रीरामयोः कार्यमुच्चैः ।
गतिरपि हरिसूनोर्विस्मृता राज्यगर्वा-
 दिति रघुजनवाक्यादागतः सैन्ययुक्तः ॥ १ ॥

अथ विजयदशम्यामाश्विने शुक्लपक्षे
 दशमुखनिधनाय प्रस्थितो रामचन्द्रः ।
द्विरदविधुमहाब्जैर्यूथनाथैस्तथान्यैः
 कपिभिरपरिमाणैर्व्याप्तभूदिक्खचक्रः ॥ २ ॥

---

प्रेमभिन्नोऽपूर्णकामाभिलाषः कपिनृपतिः सुग्रीवः प्रेयसीं रुमामपास्य त्यक्त्वा इति रघुजनकवाक्यात् रामदूतवचनात्सैन्ययुक्तो भूत्वा आगत इत्यन्वयः । इति किं तदेवाह । हे पाप जनकपुत्रीरामयोः कार्यमुच्चैर्महत् यत्त्यक्त्वा इदं स्थैर्यादिकं किमिति राज्यगर्वाद्धरिसूनोर्वालिनोऽपि गतिर्मरणरूपा विस्मृता । तवेति शेषः। यद्वा। वालिनः सकाशाद्या गतिस्ताराहरणनिलीयस्थितिरितिरूपा गतिः॥१॥

विजयमुहूर्तयुक्तायां दशम्यां द्विरदविधुमहाब्जैर्यूथनाथैः सह "अङ्कानां वामतो गतिः" इति न्यायात् द्विरदा दिग्गजाः अष्टौ । विधुश्चन्द्र एकः एतत्संख्याकमहापद्मैः अष्टादशमहापद्मसंख्याकैर्यूथनाथैः तथाऽन्यैरपरिमितैः कपिभिः सह । कीदृशैः । व्याप्तं भुवः दिशामाकाशस्य च मण्डलं यैस्तैः । द्विरदविधुमहर्क्षैरिति पाठे हस्तितुल्यैर्महर्क्षैर्जाम्बवत्प्रमुखैः ॥ २ ॥

हनूमान्—( रामं प्रति )

नृपतिमुकुटरत्न त्वत्प्रयाणप्रशस्तिं
प्लवगबलनिमज्जद्भूभराक्रान्तदेहः ।
लिखति दशनटङ्कैरुत्प-
जरठकमठभर्तुः खर्परे सर्पराजः ॥ ३ ॥

श्वासोर्मिप्रतिसन्धिरुन्धितगलप्रच्छिन्नहारावली-
रत्नैरप्यदयालुभिः कृतफणाप्राग्भारभङ्गक्रमः ।
श्रोत्राकाशनिरन्तरालमिलितस्तब्धैः शिरोभिर्भुवं
धत्ते वानरवीरविक्रमभराभुग्नो भुजङ्गाधिपः ॥ ४ ॥

---

हे नृपतिमुकुटरत्न राम सर्पराजः शेषस्त्वत्प्रयाणवर्णावली जरठकमठभर्तुः जरठो वृद्धः प्राचीनः स चासौ कमठभर्ता महाकूर्मस्तस्य खर्परे पृष्ठकपाले दशनटङ्कैर्दशना एव टङ्कास्तैर्लिखति। "स्यात्खर्परः कपालोऽस्त्री " इत्यमरः । वानरबलेन निमज्जन्ती भूस्तस्या भारेणाक्रान्तो भोगो यस्य सः । कीदृशैर्दशनटङ्कैरुत्पतद्भिरुत्पतत्सु वानरेषूत्पतद्भिः निपतत्सु वानरेषु खर्परे पतद्भिः ॥ ३ ॥

पुनरपि श्वासोर्मीतिपद्येन वाहिनीभरमेवानुवर्णयति । बहुत्वाद्यच्छिरसि इयं भूरत्यर्थं राजते स एव भुजङ्गाधिपः शिरोभिर्भुवं धत्ते। कीदृशः । वानरवीराणां विक्रमेण क्रन्दनादिविक्रमेण यो भरस्तेनासमन्ततो भुग्नो वक्रीभूतः । पुनः किंभूतः । कृतो विहितः फणानां प्राग्भारस्य भञ्जिकायाः भङ्गक्रमो येन । "प्राग्भारो भञ्जिका मता " इति विश्वः। कीदृशैः शिरोभिः । श्वासानां या ऊर्मयस्ताभिः संधिः प्रतिश्वासनिर्गमनमार्गः संधिः मुखनासादिः तं रुन्धितो यो गलः कण्ठस्तस्य वायुरोधनस्थलत्वात्प्रच्छिन्नानि त्रुटितानि हारावल्या रत्नानि येभ्यस्तैः अत एव दयालुभिः मिथःसंधानपीडानभि-

रामः—अये मरुत्तनय ।

कूर्मं क्लेशयितुं दिशः स्थगयितुं भेत्तुं धरित्रीधरान्
सिन्धुं धूलिभरेण कर्दमयितुं तेनैव रोद्धुं नभः ।
नासीरेषु पुरः पुरश्चलबलालापस्य कोलाहलात्
कर्तुं वीरवरूथिनी मम परं जैत्रं पुनस्त्वद्भुजेः ॥५॥

भिल्लीभिः—( सहासम् )

नो शस्त्रं नापि शास्त्रं नहि च रथकथा नापि दन्ती
न वाजी नोक्षाणो नापि चोष्ट्रा बत न च शिबिरो
नापि राजा जटावान् । नो वित्तं नापि वस्त्रं न च
नृपरचना काचिदत्रास्ति मातः प्रातर्द्रष्टुं स्थिता-
भिर्गिरिवरकुहरेऽभाषि भिल्लीभिरेवम् ॥ ६ ॥

भिल्लीमातरः—

विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।

---

ज्ञैः। पुनः श्रोत्राणामभावान्निरन्तरालमन्तरालशून्यं यथा स्यात्तथा-
भितः सर्वतः स्तब्धैस्तत्र नैसर्गिकसौकुमार्यैः ॥ ४ ॥

तेन धूलीभरेण रोद्धुमाच्छादयितुं नासीरेषूग्रयायिषु पुरोऽग्रे चलं
चलितं यद्बलं सैन्यं तस्यालापस्य वागाडम्बरस्य । त्वद्भुजैरिति
पूज्यत्वात्बहुवचनम् । त्वद्भुजेति वा पाठः ॥ ५ ॥

हे मातः अत्र कटके काचिन्नृपतिरचना नास्तीति भिल्लीभिर-
भाषि उक्तम् । इति किं बत हास्यम् । “ हास्यहर्षविषादेषु बत हा
कष्टकोपयोः।” इति धरणिः । उक्षाणो वृषाः । शेषं सुगमम् ॥ ६ ॥

हन्ति हनिष्यति-। “ वर्तमानसामीप्ये वर्तमानवद्वा ” प्रतिबलं
-ध्यम् । क्रियासिद्धिः कार्यसिद्धिः सत्त्वे धैर्ये । उपकरणं रथ-

तथाप्येको रामः सकलमपि हन्ति प्रतिबलं
क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे ॥ ७ ॥

( अत्रान्तरे तत्र लङ्कायां मन्त्रणायोपविष्टो मन्त्रिभिः
प्रोत्साहितो लङ्काभटानुत्कण्ठं बभाषे बिभीषणः । )

सुवर्णपुङ्खाः सुभटाः सुतीक्ष्णा
वज्रोपमा वायुमनःप्रवेगाः ।
यावन्न गृह्णन्ति शिरांसि बाणाः
प्रदीयतां दाशरथाय मैथिली ॥ ८ ॥

बिभीषणः—( रावणं प्रत्याह )

जातिं मानय मानुषीमभिमुखो दृष्टस्त्वया हैहयः
स्मृत्वा वालिभुजौ च सांप्रतमवज्ञातुं न ते वानराः ।
तत्पौलस्त्यमहाग्निहोत्रिणमहं त्वामेवमभ्यर्थये
सीतामर्पय मुञ्च च क्रतुभुजः काराकुटुम्बीकृतान् ॥ ९ ॥

---

क्षत्रादिसामग्री । सुगमम् । अत्रान्यपद्यानि सन्ति तत्र क्षेपकानीति ज्ञेयम् ॥ ७ ॥

"मन्त्रशाला तु मन्त्रणे" इति शाश्वतः । रामबाणाः तव शिरांसि ॥ ८ ॥

ननु नराः वानरा किं करिष्यन्ति तत्राह । वानरमानुषीं जातिं मानय बहु जानीहि । केयं जातिरिति तत्राह । अभिमुखो हैहयोऽर्जुनः त्वयैव दृष्टः ज्ञातः तत्कारागृहनिवासित्वात्तत्प्रसिद्धाः वानरा अवज्ञातुं तिरस्कर्तुं सांप्रतं योग्यं न । "योग्ये सद्योऽपि सांप्रतम्" इति विश्वः । कुतः । वालिभुजौ स्मृत्वा भूक्रमणे कक्षान्तरावस्थितत्वात्तत्तस्मादत एव वानरा महाग्निहोत्रिणं त्वां रामप्रतापाग्नौ

त्यजस्व कोपं कुलकीर्तिनाशनं
भजस्व धर्मं कुलकीर्तिवर्धनम् ।
प्रसीद जीवेम सबान्धवा वयं
प्रदीयतां दाशरथाय मैथिली ॥ १० ॥

रावणः—( सक्रोधम् )
जानामि सीतां जनकप्रसूतां
जानामि रामं मधुसूदनं च ।
वधं च जानामि निजं दशास्य-
स्तथापि सीतां न समर्पयामि ॥ ११ ॥

( इति वामचरणेन बिभीषणं ताडयामास । )

बिभीषणः—ततश्चतुर्भिः सह मन्त्रिपुत्रै-
रुत्सृज्य रक्षःकुलधूमकेतुम् ।

---

राक्षसकुलहविष्यहोतारं प्रार्थये । किं प्रार्थयसीत्यत्राह । सीतां मुञ्च कारागृहमेव कुटुम्बं येषां तांस्त्वत्कारागृहनिरुद्धान्मुञ्च सीतां समर्पयेति । अत्रेदं वृत्तम् । पुरा रावणेन धर्मं त्याजितैर्मुनिभी रुषा स्वस्वाङ्गजनितघर्मजलं कुम्भे प्रक्षिप्तम् । एतेन तव नाशो भविष्यतीत्युक्त्वा कुम्भं भूमौ निधाय गताः । ततो जनकयज्ञार्थं हलाकर्षणकाले तद्भेदादाविर्भूता सीता समुत्थिता । सा जनकजेत्युच्यते । अतो जनकप्रसूतामित्युक्तम् ॥ ९ ॥ १० ॥

वधं च जानामीत्यनेन मम वधोऽवश्यं भवितेति ध्वनितम् । तां तु न समर्पयामीत्युक्तम् । कुतो न समर्पयसीत्यत्राह । दशास्येति । दशास्यो भूत्वा एकास्याय कथं समर्पयामीति गूढोऽभिप्रायः । अन्यत्सुगमम् ॥ ११ ॥

क इव । बिभीषणः लङ्कायाः महातङ्कः भयमिव । पुनः रक्षःकु-

ङ्कामहातङ्क इवाम्बरण

विभीषणो राघवमाजगाम ॥ १२ ॥

( आगते बिभीषणे परस्परं वानराः )

अद्यैवास्य विभीषणस्य शरणापन्नस्य मूर्ध्नानते-
रानृण्याय ददात्ययं रघुपतिर्लङ्काधिपत्यं श्रियम् ।
एतस्यैव भुजाविह प्रतिभुवौ सुग्रीवराज्यार्पणे
त्रैलोक्यप्रथिमानसत्यचरिताः सर्वे वयं साक्षिणः॥१३॥

या विभूतिर्दशग्रीवे शिरच्छेदेऽपि शंकरात् ।
दर्शनाद्रामदेवस्य सा विभूतिर्विभीषणे ॥ १४ ॥

---

लाय धूमकेतुरिव । अत्ययहेतुरित्यर्थः । सुगमम् ॥ १२ ॥

अयं रघुपतिः अस्य बिभीषणस्याद्यैव लङ्काधिपत्यं श्रियं ददाति दास्यति । कस्याः मूर्ध्ना मस्तकेनानातिर्दण्डवत्प्रणिपातः स एवानृण्यं तदनृणाय नमतः आनृण्यायेत्यर्थः । अत्र विचिकित्समानान् कांश्चिदाहुः। इह संदेहे एतस्य रामस्यैव भुजौ सुग्रीवराज्यार्पणप्रतिभुवावुदारौ आर्द्रौ वा । "शत्रुजारमहोदारजलेषु प्रतिभूः स्त्रियाम् ।" इति शाश्वतः । अत्र सर्वे वयं साक्षिणः । कीदृशाः त्रैलोक्ये प्रथिमा पृथुत्वं सर्गसमयः अनः असुखं नाश इति । "नश्च निर्वृतिवाचकः" इत्युक्तत्वात् सर्गनाशयोर्मध्ये सत्यचरं पूर्वं सत्यचरम् । "भूतपूर्वे चरट्" विश्वादिमध्यावसाने च सत्यं रामम् इताः शरणं प्राप्ताः तद्भक्ता इति । अन्योऽर्थः स्फुट एव । तथा सुग्रीवाग्रजं हत्वा तस्मै राज्यं दत्तम् । अस्याग्रजमपि हत्वा अस्मै राज्यं दास्यतीति भावः ॥ १३ ॥

शिरसां कर्त्तने कृते सति एतेन सेव्यत्वं तमःशरीरत्वं द्योतितम् ॥ १४ ॥

( ततो रामेण )

अथ दशरथपुत्रे तत्र सौमित्रिमित्रे-
ऽप्युदगुदधितटान्ते गर्भदर्भावकीर्णे ।
अहमिह हि निविष्टे नागतोऽग्रेति रोषा-
द्यदि जलधिरनेनाप्यात्तमाग्नेयमस्त्रम् ॥१५॥

श्रीरामचन्द्रे दशवक्त्रहानौ
कृतोद्यमे क्रव्यभुजः समस्ताः ।
मित्राण्यमन्यन्त मृगं कपिं च
तपोधनं गाढतरं वनं च ॥ १६ ॥

समुद्रः—( रामं प्रति )

अस्मद्गोत्रे भविष्यद्दशरथनृपतेरश्वमेधेषु सर्पिः-
संपातोत्तापलोलज्ज्वलदलनकलाव्याकुलं कूर्मराजम् ।

---

ततः बिभीषणः रामपादौ प्रणम्योपविशति । दशरथपुत्रे उदग्गुउदधितटान्ते उत्तरदिक्समुद्रतटे विनिविष्टे सति यदि यदा जलनिधिः अग्रे रामपुरतो नागतः देवरूपेण नाविर्बभूव तदा अनेन रामेणापि आग्नेयं तज्जलशोषणहेतुम् अस्त्रं बाणम् आददे गृहीतम्। कीदृशे तटे गर्भे मध्यदेशे उपवेशनस्थाने दर्भैराकीर्णे आस्तृतदर्भे इत्यर्थः ॥ १५ ॥

मैनाकवात्सल्यादिति भावः । मृगं मारीचं वञ्चनहेतुत्वात् कपिं हनूमन्तं सीतामार्गणहेतुत्वात् तपोधनं शापदातारं वैश्यं दशरथशापदातृत्वात् वनं सीताहरणहेतुत्वात् राक्षसवधे मांसबाहुल्यादिभिरुपकारः कृत इति भावः ॥ १६ ॥

ततः अतिभयेनैवाशु वारिधिः स्वस्मिन्कृपामुत्पादयितुं तत्पूर्वजकर्तृत्वमात्मनो द्योतयन्नवध्यत्वमाविष्करोति—अस्मद्गोत्रे इति ॥

ज्ञात्वा रोदःपुटं वा ननु तव सगरः प्राग्भवो भाविवेत्ता
नेता सप्ताम्बुधीनामपि सविधमवाग्वान्तरश्मिः स्रवन्तीम्

( सरोषम् )

चापमानय सौमित्रे राघवेऽधिज्यधन्वनि ।
समुद्रं शोषयिष्यामि पदा गच्छन्तु वानराः ॥ १८ ॥

भो राम तव प्राग्भवः पूर्वजः सगरः अधि उच्चैः सविधं गङ्गामवाक् निर्ममे आनीतवानिति यावत् । यद्यपि भगीरथेनानीता गङ्गा तथापि अश्वान्वेषणपुत्रदाहादिबीजत्वात्सगर एव आनीतवानिति ध्वन्यर्थः । " उपर्यध्यधसः सामीप्ये " इति शाश्वतः । " गङ्गा वान्तिकगर्भोदविन्तेषु सविधोऽस्त्रियाम् । " इति धरणिः । अत्र गर्भोदसविधार्थैक्येन गङ्गा गृह्यते । अवागिति " वचि निर्माणे " इति अस्य धातोर्लुङि रूपम् । कविकामधेनौ । ननु पुनरपि सप्ताम्बुधीनां वान्ताः अधोगताः ये रश्मयस्तरङ्गास्तेषां स्रवन्तीम् अष्टमं समुद्रं मामङ्गीकृत्येत्यर्थः। यद्वा। सप्ताम्बुधीनां मध्ये समं मामकृतेत्यर्थः। विसर्गान्तपाठे वान्ताः सर्वगताः रश्मयस्तेजांसि " अश्वस्त्री पशुभेदे पुमान् " इति धरणिः । " नद्यष्टमप्रधानेषु स्रवन्ती स्यात्पुमान् हरेः । " इति चरकः । अतः स्रवन्तीम् अष्टमं किं कृत्वा अस्मद्गोत्रे वंशे भावी यो दशरथाख्यनृपतिस्तस्याश्वमेधेषु यः सर्पिःसंपातः घृतादिहोमस्ततो य उत्तापस्तद्युक्ता याः लोलाः सर्वतः प्रसरन्त्य उज्ज्वलदनलस्य कलाः ज्वालास्ताभिर्व्याकुलम् अधः कूर्मराजः ज्ञात्वा ऊर्ध्वं च रोदःपुटम् । " द्यावाभूमी च रोदसी " इत्यमरः । द्यावाभूमी ज्ञात्वा । नन्वेतत्पुरैव कथं ज्ञातमिति चेत्तत्राह । भाविवेत्ता एतद्भविष्यतीति ज्ञानवान् यतस्त्वत्पूर्वजकर्तृकोऽहमतो भवद्वध्योऽस्मीति भावः । " विषवृक्षोऽपि संवर्ध्य स्वयं च्छेत्तुमसाम्प्रतम् । " इति ॥ १७ ॥

अत्रेदं पूर्ववृत्तम् । मन्दरपर्वतस्थो विश्वकर्मा नलपिता प्रसन्नः

( ततः प्राञ्जलिपुटोपस्थितस्य समुद्रस्याज्ञया नलेन निबध्यमाने सेतौ तरतः प्रस्तरानवलोक्याह । )

हनूमान्—

ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे
वार्द्धौ वीर तरन्ति वानरभटान्संतारयन्तेऽपि च ।
नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः
श्रीमद्दाशरथेः प्रतापमहिमारम्भः समुज्जृम्भते ॥ १९ ॥

कपेश्च सेनाप्लवगैः पुरोगैः
पाथोमयं भूवलयं व्यलोकि ।
तत्पृष्ठगैः पङ्कमयं तदान्यै-
रासीदिहाम्भोनिधिरित्यवादि ॥ २० ॥

इति श्रीहनुमन्नाटके सेतुबन्धनं नाम सप्तमोऽङ्कः ॥७॥

---

सन्नलमात्रे वरं ददौ । तव पुत्रो नलो मत्तुल्यो भविता अन्यच्च शिल्पकर्मणि । अनेन प्रक्षिप्तं शिलातृणकाष्ठादिकमपि जलेऽप्युपर्येव स्थास्यते अतो नलेन सेतुर्बद्ध इति रामायणे उक्तम् । एते गुणाः प्रस्तरतरणरूपाः "ग्रावाणः प्रस्तराः शिलाः" इति शाश्वतः ॥ १८ ॥

हे श्रीमद्दाशरथे यद्वा षष्ठ्यन्तं श्रीमद्दाशरथेस्तव ॥ १९ ॥

एतत्पद्येन सैन्यबहुत्वं द्योतितम् । न तु वास्तवं यद्वा नराणाम् उन्मादो जातः स चाति आहवान्तः ततो हृद्भ्रमस्तस्मादियमुक्तिः । अन्यथा समुद्रे पङ्कादिदर्शनं पुनस्तदभावोऽपि वास्तवश्चेत्ततः सेतुबन्धनादिकमप्रयोजकं स्यात् । उक्तं च रसोदधौ । "प्रौढानन्दयुजो यस्तद्रूपः स उन्मादः ।" इति ॥ २० ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकायां टीकायां सेतुबन्धो नाम सप्तमोऽङ्कः ॥ ७ ॥

# अथ अष्टमोऽङ्कः ।

रामः सुवेलाद्रितटेऽवतीर्णः
समुद्रमुल्लङ्घ्य विकीर्णसैन्यः ।
कृपामुपेत्यारिकुलस्य दूतं
सुरेन्द्रनप्तारमथादिदेश ॥ १ ॥

रामः—भो महावीराङ्गद ।

अज्ञानादथवाधिपत्यरभसादस्मत्परोक्षे हृता
सीतेयं परिमुच्यतामिति वचो गत्वा दशास्यं वद ।
नो चेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ॥ २ ॥

अङ्गदः—यथाज्ञापयति देवः । ( स्वगतम् )

हन्तुर्हन्तास्मि नो चेत्पितुरपि परमोत्पन्नसंपूर्णकार्यं
स्याद्वै युद्धे वधिष्याम्यखिलकपिभटैरुत्कटो हन्तुमेकः ।

---

विकीर्णं सर्वतो विक्षिप्तं सैन्यं यस्य सुवेलपर्वतावतारे ॥ १ ॥

"रभसो गर्ववेगयोः" इति चरकः । न त्यजसि तर्हि लक्ष्मणेन मुक्ता ये मार्गणगणा बाणव्रातास्तैर्ये छेदाः प्रहाराः तेभ्य उच्छलन्ति उद्गच्छन्ति शोणितानि तद्युक्तैश्छत्रैः कण्ठैरातपत्रैर्वा छन्नमाच्छादितं वा यथा स्यात्तथा यमपुरं यास्यसीति । "ग्रीवातपत्रयोश्छत्रम्" इति शाश्वतः । अत्र छत्रं ग्रीवा ॥ २ ॥

चेद्यदि पितृवैरमनुस्मृत्य रामं हन्मि तर्हि महदकार्यं स्यात् चेत्पितुर्वालिनो हन्तुर्घातकस्य रामस्य हन्ता नोऽस्मि न स्यां तर्हि

ज्ञात्वा संत्यज्य वैरं गगनमिति समुत्पत्य लङ्कोद्भटस्य
प्रौढः पट्टाधिरूढः सुरपतिसुतजस्तन्महोत्पातकेतुः॥३॥

( ततः प्रविशत्यञ्जलिबद्धः प्रहस्तः । )

देव। रामस्य दूतः शाखामृगो द्वारे।

रावणः—प्रवेशय।

( ततः प्रविशति प्रहस्तेन सहाङ्गदः । )

अङ्गदः—( आकाशे लक्ष्यं बद्ध्वा )

रे राक्षसाः कथयत क्व स रावणाख्यो
रत्नं रवीन्दुकुलयोरपहृत्य नष्टः।
त्रैलोक्यदीपनकरत्रिशिखाकराले
यो रामनामदहने भविता पतङ्गः॥ ४ ॥

---

अपिशब्दात्पुनर्जनयितुर्वालिनश्च परमं महत् उत्पन्नमुपस्थितं संपूर्ण कार्यं स्यात्। वैशब्दादत्रापि पुनर्योजनम्। तथापि पितुर्हन्तुः रामस्यापि कार्यं स्यात्। वालिनोऽपि रावणः शल्यं रामस्यापि अत एव तद्धनने उभयोः कार्यं स्यादिति भावः। अतोऽखिलकपिभटैः सार्द्धमपि तं राममेकोऽप्यहं वधिष्यामीति ज्ञात्वा विचार्य वैरमपि संत्यज्य गगनं समुत्पत्य लङ्काधिपस्य पट्टाधिरूढः बहिः सिंहासनस्थोऽभवदित्यर्थः। तत्रापि प्रौढः सगर्वः सुरपतिसुतो वाली तस्य तनयः तस्य रावणस्यात्यनिष्टाय महोत्पातकेतुः धूमकेतुः ॥ ३ ॥

रे इत्यनादरे। रे राक्षसाः कथयत वदत। रावणाख्यः रावणेति नामा राक्षसः क्व कीदृशः। रवीन्दुकुलयोः सोमसूर्यवंशयोः मध्ये रत्नं रूपगुणासाधारणां सीतामपहृत्य नष्टः निलीय स्थितः। त्रैलोक्यदीपनकरस्य रुद्रस्य त्रिशिखवत् त्रिशूलवत्कराले भयंकरे। सुगमम् ॥ ४ ॥

रावणः—( साभ्यसूयम् )
सोऽपि त्वं कमिहावगच्छसि पुरा योऽदाहि लाङ्गूलतो
बद्धो मत्तनयेन हन्त स कथं मिथ्यावदन्नः पुरा ।
किं लङ्कापुरदीपनं तव सुतस्तेनाहतोऽक्षो युधी-
त्युक्तः कोपभयत्रपाभरवशस्तूष्णीमभूद्रावणः ॥ ५ ॥

रावणः—कस्त्वं वानर रामराजभवने लेख्यार्थसंवाहको
यातः कुत्र पुरागतः स हनुमान्निर्दग्धलङ्कापुरः ।

अङ्गदः—( साधिक्षेपम् )
बद्धो राक्षससूनुनेति कपिभिः संताडितस्तर्जितः
स व्रीडार्तिपराभवो वनमृगः कुत्रेति न ज्ञायते ॥ ६ ॥

यो युष्माकमदीदहत्पुरमिदं योऽदीदलत्कानन
योऽक्षं वीरममीमरद्गिरिदरीर्योऽबीभरद्राक्षसैः ।
सोऽस्माकं कटके कदाचिदपि नो वीरेषु संभाव्यते
दूतत्वेन इतस्ततः प्रतिदिनं संप्रेष्यते साम्प्रतम् ॥ ७ ॥

---

अत्र उक्तिप्रत्युक्त्योद्घाटनम् एवार्थेऽपिशब्दः । सोऽपि त्वं त्वमेव अङ्गदः सोऽपि त्वं कमिवावगच्छसि कमिव जानासि । यः पुरा लाङ्गूलतः अदाहि मत्तनयेनेन्द्रजिता बद्धश्च । हन्तेति वितर्के । स हनूमान् नः अस्माकं पुरोऽग्रे कथं मिथ्यावदत् किं मिथ्योक्तम् । अङ्गदः लङ्कापुरीदहनं मया कृतमित्युक्तम् । तव सुतोऽक्षनामा निहत इत्युक्तम् । तेनाङ्गदेनोक्तो रावणस्तूष्णीमभूत् । कीदृशः कपौ अङ्गदे भयं हनूमतः त्रपा श्रोतृभ्यः एतदधीनः रावणः ॥ ५ ॥

अत्राप्युभयवादः । यो हनूमान् पुरा आगतः स कुत्र यातः व्रीडैवार्तिस्ततः पराभवो यस्य ॥ ६ ॥

संभाव्यते संभावितः क्रियते । अदीदलत् उन्मूलयामास । सुगमम् ॥ ७ ॥

अपि च ।

यो लङ्कां समदीदहत्तव सुतं रक्षांसि चापीपिष-
द्यः कौशल्यमवीवदज्जनकजामब्धिं तथातीतरत् ।
यश्चाराममम्रमुटत्स हनुमानस्मत्प्रवीरोऽद्य मे
दूराक्रामणदौत्य एव न पुनर्योद्धुं समादिश्यते ॥ ८ ॥

रावणः—( सावज्ञम् )

रामः स्त्रीविरहेण हारितवपुस्तच्चिन्तया लक्ष्मणः
सुग्रीवोऽङ्गदशल्यभेदकतया निर्मूलकूलद्रुमः ।
गण्यः कस्य बिभीषणः स च रिपोः कारुण्यदैन्यातिथि-
र्लङ्कातङ्कविटङ्कपावकपटुर्वध्यो ममैकः कपिः ॥ ९ ॥

---

अत्रानेकानि पद्यानि क्षेपकानि तेषु कानिचिल्लिख्यन्ते । यो जनकजां प्रति कौशल्यं रामकुशलत्वमवीवदत् आराममम्रमुटत् भङ्गीचकार । " मुट भङ्गे " स हनूमान् प्रवीरोऽद्य मे प्रकृष्टानां वीराणां संमर्दे सति योद्धुं नादिश्यते परंतु दूरोल्लङ्घने दौत्ये चादिश्यते इति यस्तव तादृगवमानं कृतवान् सोऽस्माकं न कियानपीति भावः ॥८॥

रे अङ्गद स एक एव कपिर्वध्योऽस्ति । ननु बहुषु वीरेषु सत्सु कथमेक एव वध्य इत्यपेक्षायामाह । रामः स्त्रीविरहेण हारितं वपुर्येन सः तच्चिन्तया रामस्य चिन्तया लक्ष्मणोऽपि हारितवपुः सुग्रीवः निर्मूलकूलद्रुमः निर्मूलितनदीतटवृक्षवत पातुकः अतिवृद्धत्वात् अङ्गदशल्यभेदकतया वाली तु तेन घातितः तत्सुतोऽङ्गदस्तस्य भेदकतया सशल्यो निरुत्साहः सन् मृतवत् बिभीषणः कस्येति केन गण्यः स च बिभीषणः रिपोः रामस्य कारुण्यस्य दैन्येन मनोबलाभावेन अतिथिर्जातः । " कारुण्यं करुणा घृणा " इत्यमरः । कीदृशः कपिः लङ्कायास्तद्वासिजनानाम् आतङ्कविटङ्कः भयनिर्मितो यः पावकः तद्दाने पटुः मध्यमपदलोपी समासः ।

कस्त्वं वन्यपतेः सुतो वनपतिः कः सार्थिकस्त्वेकदा
यातः सप्तसमुद्रलङ्घनविधावेकाह्निको वेद्मि तम् ।
अस्ति स्वस्तिसमन्वितो रघुवरे रुष्टेऽत्र कः स्वस्तिमान्
को भूयादनरण्यकस्य मरणातीतो चिताम्बुप्रदः ॥१०॥

रामः किं कुरुते प्रतीपविजयं कोऽसौ प्रतीपो जितो
वाली सोऽपि च को न वेत्सि किममुं को वेत्ति शाखामृगम् ।
आस्तेऽत्रापि तवास्ति विस्मृतिरहो मोहो महानीदृशः
पर्यङ्के निजबालकेलिकृतये बद्धोऽसि येनोपरि ॥ ११ ॥

यद्वा । स्त्रीविः अहेण हा अरितवपुरिति पदच्छेदः । स्त्रीविः सीता-कामुको रामः अहेण कोपातिशयेन अरितवपुः शत्रुघातकशरीरः । हेति कष्टम् । " पक्षिकामुकयोर्विः स्यात् " इत्येकाक्षरः । " अहे-णेति दिनकोपातिशयोः " इति लिङ्गानुशासने । " अरितः शत्रु-घातकः " इति सारस्वतः । अयं वार्थः ॥ ९ ॥

वन्यपतेर्वालिनः एकस्मिन्नहनि यातः एकाह्निकः । अत्र विषये रावणः को भूयात कोऽपि भवतु । अङ्गदः अनरण्याख्यो रामपूर्वजः अपूर्वरणे रावणेन हतस्तद्वैरं स्मारयति । अनरण्यकस्य राज्ञः मरणसमयादागतं यदुचिताम्बुत्वाद्रुधिरतर्पणं तत्प्रदः यस्त्वद्रुधिरेणानरण्यं तर्पयिष्यतीति भावः । अत्र सर्वत्रैकाङ्के उक्तार्थवादः नियोक्तृविस्मृतित्वात् ॥ १० ॥

असौ त्वदुक्तो राम इति योज्यम् । "आस्तु स्यात्कोपपीडयोः" इत्यमरः । येन वालिना मदीयक्रीडार्थम् उपरि पर्यङ्के ऊर्ध्वचरणोऽधःशिराः त्वं बद्धोऽसि तत्रापि वालिनि तस्मिन्नपि वालिनि तवापि भवतो विस्मृतिः। अहो महदाश्चर्यं मोहो मूढता महानस्तीति ॥११॥

आदौ वानरशावकः समतरद्दुर्लङ्घ्यमम्भोनिधिं
दुर्भेद्यान् प्रविवेश दैत्यनिवहान्संपेष्य लङ्कापुरीम् ।
क्षिप्त्वा तद्वनरक्षिणो जनकजां दृष्ट्वा तु भुक्त्वा वनं
हत्वाक्षं प्रदहन्पुरीं च स गतो रामः कथं वर्ण्यते ॥ १२॥

रावणः–( समाक्षिपति )

भग्नं भस्ममुमापतेरजगवं वाली क्षतः सूक्ष्मत-
स्तालाः सप्त हता हताश्च जलधिर्बद्धश्च बद्धश्च सः ।
आः किं तेन सशैलसागरधराधारोरगेन्द्राङ्गदं
सार्द्रिं रुद्रमुदस्यतो निजभुजान् जानात्यसौ रावणः १३॥

---

रावणविजयिवालिहननाद्रामबलमुपादिश्य पुनः कैमुतिकन्यायेन राममनुवर्णयति । दुर्भेद्यान् अजेयान् दैत्यनिवहान् समुद्रलङ्घनविघ्नकरान् दैत्यव्रजान् संपीड्य हत्वा लङ्कापुरीं प्रविवेशेति योज्यम् । क्षिप्त्वा तिरस्कृत्य त्वां हत्वा त्वयि विद्यमाने त्वत्सुतहननं त्वद्वननं पुरीं लङ्कां प्रदहन् स च वानरोऽपि तूष्णीं गतः । अस्मद्दक्षानेकेशो रामः कथं वर्ण्यत इति ॥ १२ ॥

आः कोपे । तेन रामेण किं न किमपीत्यर्थः । असौ मल्लक्षमः रावणः निजभुजान् आत्मभुजपराक्रमान् जानाति । किंविशिष्टान् भुजान् सार्द्रिं रुद्रमुदस्यतः उद्धृतवतः । कीदृशं रुद्रं शैलाश्च सागराश्च धरा च एतेषामाधारश्चासावुरगेन्द्रश्च स एवाङ्गदं बाहुभूषणं यस्य तम् । पूर्वभागप्रकरणे स्पष्ट एवार्थः प्रतिपाद्यते । तेन रामेण अजगवं भग्नं रामेतरैर्मनसाप्यधृष्यं किमु भङ्क्तुं "त्रुटिताधृष्ययोर्भग्नं भग्नोऽस्त्री नाशखण्डयोः ।" इति शाश्वतः। रामेणेति सर्वत्र । वाली क्षतः घातितः। कीदृशो वाली सुक्षतः शोभनाः विजयसूचकाः

अङ्गदः—(साटोपं स्वामिभक्तिमभिनीय)

कृत्वाकक्षागतं त्वा कपिकुलतिलकोवालिनामावलीयान्
भ्रान्तः सप्ताब्धितीरे क्षणमिव चरितं स्नानसन्ध्यार्चनं च।
बाणेनैकेन येनाहत इति पतितो वानरव्रीडयैव
त्यक्त्वा सोऽपि प्रगर्वं द्युमणिसुतपुरं मुञ्च लङ्केशगर्वम्॥१४

यत्संदेशहरेण मारुतसुतेनातारि वारांनिधिः
क्षिप्रं गोष्पदवन्निजालयमिव प्रावेशि लङ्का पुरी।

क्षताः प्रहारा यस्य अनेक युद्धविजयीत्यर्थः। तालाः हता हिंसिताः परमा रणोपायज्ञाः। "हन हिंसागत्योः"। गत्यर्थाः ज्ञानार्थाः। जलधिर्बद्धः किंभूतो जलधिः दुष्प्रेक्ष्यः किमु बद्ध इति बन्धने पटुरालोके "बद्धः संख्याजयोः पुमान्" इति धरणिः। किं कृत्वा धनुर्भग्नं रुद्रं दण्डमुदस्योच्चैराक्षिप्येति। तालाः किं कृत्वा हताः सशैलसागरधरश्चासौ उरगेन्द्रः शेषः तस्याङ्गदम् उदस्य लक्ष्मण-पादाङ्गुष्ठेनाक्षिप्य "शिरोवानरभूषासु जनकेऽप्यङ्गदः पुमान्।" इति धरणिः। जलधिर्बद्धः किं कृत्वा वरुणार्कयुक्तोदकस्य तद्गृहत्वात्। "साद्रिर्वरुणपङ्क्योः" इति हैमः। "अद्रयो द्रुमशैलार्काः" इत्यमरः। असौ रावणो निजभुजान् जानातीति कटाक्षः। कीदृशोऽसौ तः चौर्यकृत् "तकारश्चौर्ययोः" इति हैमः॥ १३॥

ध्यानपूर्वकं सन्ध्यार्चनं च तेन चरितं कृतम्। एवंभूतो वाली येन रामेण एकेनैव बाणेन हतः कोपेन हतः सोऽपि वाली प्रगर्वं त्यक्त्वा द्युमणिसुतो यमस्तत्पुरं पतितः प्राप्तः। तस्माद्धो लङ्केश गर्वं मुञ्च। के वयं वानरव्रीडयैव वानराणां लज्जयैव यमपुरं गत इति त्वद्वि-जयी वाल्येनाहतः। भवतः का कथेति भावः॥ १४॥

निजालयमिव निजगृहमिव सीता अदर्शि च समभ्यभाषि च।

सीतादर्शि समभ्यभाषि च वनं चाभञ्जि रक्षःपतेः
सैन्यं भूर्यवधि व्यदाहि च पुरी रामः कथं वक्ष्यते॥१५॥

रावणः—( सक्रोधम् )

कुतो हन्तारण्ये कनकमृगमात्रं तृणचरं
कुतो वृक्षाद्वृक्षप्लवननिपुणो वालिनिहतः ।
कुतो वह्निज्वालाजटिलशरसन्धानसुदृढ-
स्त्वहं युद्धोद्योगी गगनमधितिष्ठेन्द्रविजयी॥ १६ ॥

अङ्गदः—( समदम् )

संधौ वा विग्रहे वापि मयि दूते दशानन ।
अक्षतो वा क्षतो वापि क्षितिपीठे लुठिष्यसि ॥ १७ ॥

---

यस्य संदेशहरेणैतत्कृतं स रामः कथं कथ्यत इति ध्वनिः ॥१५॥

अरण्ये तृणचरं तत्रापि कनकमृगमात्रं न तु सिंहादि हतवानिति शेषः । हन्ता घातुकः कुतो यातः । गगनमधितिष्ठे अधिश्रये गगनलोकानपि जितवानिति भावः।कीदृशोऽहम् इन्द्रविजयी अत्रैकारादिकारलोपः । तदुक्तं शब्दभास्करे । " क्वचिदेङः अकराकारेकाराणां क्वचिल्लोपः स्यान्न शश्वत्" सुगमम् । अथ वागर्थः । "तृणं पिशितशष्पयोः " इति हैमी । तृणचरं मांसाशिनं रक्षोरूपं " वृक्षो ना द्वीपशाखिनोः" इति धनञ्जयः। द्वीपादपि द्वीपप्लवने द्वीपोल्लङ्घने विदग्धः। कुतो राम एव तद्धन्ता वह्निज्वालेत्यादि रामविशेषणम् । पुनः कीदृशो रामः इन्द्रस्य विजयः इन्द्रविजयः इन्द्रजयकारक इति । कुतोऽहं रावणः उद्गतो योगः उद्योगः उद्योगी रणसभयः सन् अधितिष्ठे गगनं लाघवम् ॥ १६ ॥

सन्धौ अक्षतः । दशाननेति पाठे समाहारे ङीप् । दशानामाननानां समाहारस्त्वामिति ॥ १७ ॥

मा रावण रामदूत
बाणा यदीयाः खरदूषणैणम् ।
भुक्त्वा तृषार्त्ता इव शोणिताम्भः
पास्यन्ति ते कण्ठघटैः सरन्ध्रैः ॥ १८ ॥

रावणः—वानराधम कटुप्रलापिन् पश्य ।

मन्दमन्दं मदग्रे-
ऽप्यष्टौ ते लोकपाला मम भयचकिताः पादरेणुं ववन्दुः ।
दृष्ट्वा तं चन्द्रहासं स्रवति सुरवधूपन्नगीनां च गर्भौ
निर्लज्जौ तापसौ तौ कथमिह भवतो वानरान्मेलयित्वा ॥

अङ्गदः—(तत्क्षणाविष्कृतक्रोधः कम्पमानः पाणितलेन भूतलं ताडयित्वा दोःस्तम्भास्फालकेलिं नाटयति )

रे रे राक्षसवंशघात समरे नाराचचक्राहतं
रामोत्तुङ्गपतङ्गचापयुगले तेजोभिराडम्बरे ।

---

खरदूषणौ इत्युपलक्षणम् । खरत्रिशिरस एते एणाः एणानां मांसम् ऐणम् । अन्यत् सुगमम् ॥ १८ ॥

एतन्ममैश्वर्ये सति निर्लज्जौ तापसौ इह मदग्रे वानरान् मेलयित्वा तां सीतां कथं भवतः प्राप्नुतः ।भू प्राप्तावात्मनेपदी वा।अथ वागर्थः प्रतिपाद्यते।निर्गता ब्रह्माण्डे लज्जा याभ्यां यौ वीक्ष्यान्ये सलज्जा भवन्तीति । तापसौ तपोहृदयौ "तपो मे हृदयं साक्षात्" इत्युक्तत्वात् । कथं शिरश्चालने कथं भवतः । अपि तु न भवत एव ॥ १९ ॥

रामस्योत्तुङ्गौ सर्वोत्तमौ यौ पतङ्गचापौ बाणधनुषी तयोर्युगले तेजोभिः क्षात्त्रप्रतापैः कृत्वा आडम्बरे समारब्धे सति "पतङ्गौ रविमार्गणौ" इति विश्वः । "आडम्बरः समारम्भगजगर्जितसूर्ययोः ।"

मन्ये शैर्षमिदं त्वदीयमखिलं भूमण्डले पातितं
गृध्रैरालुठितं शिवाकवलितं काकैः क्षतं यास्यति२०

रावणः—( सप्रपञ्चम् ) रे रे शाखामृग त्वामहं धर्मशीलतया कटुप्रलापिनमपि न हन्मि । उक्तं च ।

यथोक्तवादी दूतः स्यान्न स वध्यो महीभुजा ।
क्रूरस्तदीयकोपेन क्वचिद्वैरूप्यमर्हति॥२१॥

अङ्गदः—( सवैदग्ध्यम् )

परदारापहरणे न श्रुता या दशानन ।
दृष्टा दूतपरित्राणे साधोस्ते धर्मशीलता ॥ २२ ॥

रावणः—( सगर्वम् )

इन्द्रं माल्यकरं सहस्रकिरणं द्वारि प्रतीहारकं
चन्द्रं छत्रधरं समीरवरुणौ संमार्जयन्तौ गृहान् ।

---

इति विश्वः । यद्वा । कीदृशे समरे रामस्योत्तुङ्गपतङ्गचापयुक्ताः अला दिशो यत्र सर्वदिक्षु रामबाणचापाविव दृश्यौ यत्र नान्यत् । "अलोऽस्त्री दिक्प्रदानयोः" इति चरकः । पुनः कीदृशे समरे तेजोभिराडम्बरे प्रागल्भ्यं यत्र अखिलं शीर्षदशकं तस्य समूहः अनेन शीर्षाणां समूहः शैर्षम् ॥ २० ॥

क्रूरेति ॥ कटुप्रलापी तदीयकोपे तस्मिन् दूत एव यः कोपस्तेन क्वचित्कस्मिंश्चिदङ्गे वैरूप्यं विरूपत्वं कर्णनासाद्यभावम् ॥ २१ ॥ २२ ॥

इदं व्यञ्जकं तेन धर्मशीलत्वमुक्तमबलत्वं च । प्रकरणार्थस्तु स्पष्ट एव । अथ वाग्र्थः प्रतीयते वाणी कथयति । हे रावण स्वकीये गृहे किं वस्तु स्तौषि तव तु किमपि नास्तीति भावः । मत्

पाचंक्ये परिनिष्ठितं हुतवहं किं मद्गृहे नेक्षसे
रक्षोभक्ष्यमनुष्यमात्रवपुषं तं राघवं स्तौषि किम् ॥२३॥

अङ्गदः—(विहस्य)

रे रे रावण हीनदीनकुमते रामोऽपि किं मानुषः
किं गङ्गापि नदी गजः सुरगजोऽप्युच्चैःश्रवाः किं हयः ।
किं रम्भाप्यबला कृतं किमु युगं कामोऽपि धन्वी न किं
त्रैलोक्यप्रकटप्रतापविभवः किं रे हनूमान् कपिः॥२४॥

रावणः—(सरोषम्)

कस्त्वं कस्यासि पुत्रः क्व पुनरिह गतः किं नु

---

मत्तः वाण्याः सकाशात् वर्णनद्वारेण तं राघवं न ईक्षसे न विचारयसि । तं कं यस्येन्द्रं माल्यकरमित्यादि योज्यम् । यत्तदोर्नित्ययोगात् । कीदृशं राघवं रक्षांसि भक्ष्याणि वध्यानि यस्य एवंभूतं मनुष्यमात्रं मनुष्यमात्रा अंशा यस्य एवंभूतं वपुर्यस्य ॥ २३ ॥

हीना अल्पा तत्रापि दीना अनुकम्प्या कुमतिर्विपरीता मतिर्यस्य तत्संबुद्धिः । उक्तं रसोदधौ । "शास्त्रविचारसमुत्थं निर्धारणमर्थतो मतं विबुधैः।" इति । अत एवाशास्त्रीयमते । त्रिपदं वा संबोधनम् । त्रैलोक्ये प्रकटः प्रसिद्धः प्रतापस्य विभवो वैभवं यस्य स इति। सुरगजः इन्द्रहस्ती किं साधारणो गजः अपि तु न। तथोच्चैःश्रवाः। हनुमान् कपिः किम्। प्रत्येकं प्रथमैकवचनं विशेषणम्। यद्वा बहुवचनम् । किंविशिष्टाः सर्वे त्रैलोक्यप्रकटः प्रसिद्धः यः प्रतापस्तेन विभवः ईश्वराः । एतेनैतेषामैश्वर्यभीषणत्वं द्योतितम् । उक्तं च रसोदधौ । "ऐश्वर्यैराकृतिभिः प्रकृतिभिरपि भीषणास्त्रिधा गदिताः ।" इति ॥ २४ ॥

इह लङ्कायां पूर्वं गतः हनूमान् क्व अधुना कुत्रास्ते । विष्टपानां

कृत्यं च कस्माद्दिस्पष्टं विष्टपानां विजयिनमपि
मां मन्यसे त्वं तृणाय । हंहो पौलस्त्य पुत्रस्तव
बलमथनस्याङ्गदोऽहं सुवेलात्संप्राप्तो रामदूतो
विसृज जडमते जानकीं वा शिरो वा ॥ २५ ॥

रावणः—

धिग्धिगङ्गद मानेन येन ते निहतः पिता ।
निर्माना वीरवृत्तिस्ते तस्य दूतत्वमागतः ॥ २६ ॥

अङ्गदः—

युक्तं कृतं तु रामेण येन मे निहतः पिता ।
त्रैलोक्ये शास्ति कृत्याय वर्त्तते स दुरात्मनाम् ॥ २७ ॥

किं कार्यं वद राघस्य न च किं बद्धः किमम्भोनिधिः
क्रीडार्थं कपिपोतकैरतरलं जानात्यसौ मां न हि ।
लङ्कानाकनिकायवैरिवसतिं किं वेत्ति वेत्त्येव हुं
को लङ्काधिपतिर्विभीषण इति प्रख्यातकीर्तिर्भुवि ॥ २८ ॥

---

स्वर्गनिवासिनां देवानामपि विजयिनं मां तृणाय मन्यसे तृणप्रायम् । अङ्गदः हंहो आश्चर्यं हे पौलस्त्य तव बलमथनस्य वालिनः पुत्रोऽहम् ॥ २५ ॥

दूतत्वं दूतभावम् ॥ २६ ॥

शास्तिर्निग्रहः स एव कृत्यं तस्मै परदारापहारिणो हननं युक्तमिति भावः ॥ २७ ॥

अतरलं संग्रामेष्वपलायनं नाकनिकाया देवास्तद्वैरेर्मम वसतिस्थानं हुमिति क्रोधे । लङ्काधिपतिः कः । अङ्गदः प्राह । भुवि विभीषणो लङ्केश इति प्रसिद्धकीर्तिः । सुगममन्यत् ॥ २८ ॥

रावणः—

बद्धः सेतुर्यदि जलनिधौ वानरैस्तावता किं
नो वल्मीका क्षितिधरनिभाः किं क्रियन्ते पिपीलैः ।
दग्धा लङ्का यदपि कपिना स स्वभावः किलाग्नेः
शौर्याश्चर्यं निजभुजजये किं कृतं रामनाम्ना ॥ २९ ॥

अङ्गदः—

रामो नाम स एव येन भगिनीनासावसापङ्किलः
खड्गस्ते खरदूषणत्रिशिरसां धौतः शिरःशोणितैः ।
तद्धामान्तनितान्तबद्धवपुषः संमूर्च्छितस्य ध्रुवं
घ्राणं दर्पमिव स्वसुर्विलुठितं रामः कथं विस्मृतः॥३०॥

रावणः—

परिमितमहिमानं क्षुद्रमेनं समुद्रं
क्षितिधरघटनाभिः कोयमुत्तीर्यगर्वः ।

---

निजभुजजयनिमित्तं पिपीलिकैः कीटैः।प्रकरणार्थोऽत्र स्पष्ट एव । वागर्थः प्रतिपाद्यते। किमित्यपूर्त्तौ रामनाम्ना निजभुजजयेऽपि शौर्याश्चर्यं कृतं परंतु तदङ्गैरेव कृतं सतु जगदुद्धरणासक्त इति भावः२९

नामेति प्रसिद्धं स एव येन ते भगिनी शूर्पणखा तस्याः नासावसापङ्किलः लग्नकर्दमः खरदूषणत्रिशिरसां त्वद्भ्रातॄणां शिरःकृन्तनोत्थशोणितधौतः क्रोधातिशयात्पुनः मर्म स्पृशति । येन रामेण संमूर्च्छितस्य पर्यस्तलोचनस्य तव दर्पमिव स्वसुः त्वद्भगिन्याः घ्राणं विलुठितुं क्षिप्तं स रामः कथं विस्मृत इति । कीदृश्याः स्वसुः तद्धामान्तनितान्तबद्धवपुषः तद्धामान्ते सीतासमीपे नितान्तं बद्धं स्थिरीकृतं वपुर्यया सा तस्याः सीतावदहमप्यत्रोपाविशामीति भावः ॥ ३० ॥

एतच्छ्रवणापत्रपो रावणस्तदुक्तविस्मरणायान्यदेवाह । अग्रत-

अकलितमहिमानः सन्ति दुष्प्रापपारा

दशवदनभुजास्ते विंशतिः सिन्धुनाथाः॥ ३१ ॥

अङ्गदः—

रे रे रावण रावणाः कति बहूनेतान्वयं शुश्रुमः

प्रागेकं किल कार्त्तवीर्यनृपतेर्दोर्दण्डपिण्डीकृतम् ।

एकं नर्त्तनदापितान्नकवलं दैत्येन्द्रदासीगणै-

रन्यं वक्तुमपि त्रपामह इति त्वं तेषु कोऽन्योऽथ वा॥३२॥

रावणः—

भ्राता मे कुम्भकर्णः सकलरिपुकुलव्रातसंहारमूर्तिः

पुत्रो मे मेघनादः प्रहसितवदनो येन बद्धः सुरेन्द्रः ।

खड्गो मे चन्द्रहासो रणमुखचपलो राक्षसा मे सहायाः

सोऽहं वै देवशत्रुस्त्रिभुवनविजयी रावणो नाम राजा॥३३॥

---

क्यः महिमा येषां ते प्रसिद्धाः । " विंशत्याद्याः सदैकत्वे " इत्यमरः । सर्वं सुगमम् ॥ ३१ ॥

भुजगर्वमपाकरिष्यन्नङ्गदोऽनुवदति । रे रे रावण कति कियन्तः सन्ति वयं तु एतान्वक्ष्यमाणलक्षणान् अन्यापराधशूरान् आहत-शिलाक्रान्तकरादीनपि शुश्रुमः । तानेवाह । प्राक् पूर्वं कार्त्तवीर्यस्य नृपतेर्दोर्दण्डैः पिण्डीकृतं बद्धम् । अन्यच्च दैत्येन्द्रदासीजनैर्दैत्येन्द्रस्य प्रह्लादस्य बलेर्वा दासीजनैः तिरस्कृतमिति शेषः । बलिन द्वारि निर्जित्य बद्धः तदा क्षुत्क्षामो जातः तदावरोधागतदासीजनैर्नर्त्तनेन दापितमन्नकवलं यस्मै तमेकम् । अन्यं वालिकक्षान्तर्लीनं पुनर्मत्पर्यङ्कोपरि बद्धं त्रपामहे स्वपितृबलवर्णनेन लज्जामहे । तेषु रावणेषु त्वं कः अथवा तेभ्योऽन्य एव वा ॥ ३२ ॥

तेन एवमुक्तो रावणः सापत्रपो भूत्वाऽऽत्मानं लक्षयति एवंबलमात्मानम् उपदिश्य पूर्वपराजयमाक्षिपति ॥ ३३ ॥

प्रहस्तः—( सरोषम् )

स्यातां नाम कपीन्द्रहैहयपती तस्यावगाढान्तर-
स्थेमानौ दशकन्धरस्य महती स्कन्धप्रतिष्ठा पुनः ।
सद्यःपाटितकण्टकीकसकणाकीर्णां यदंसस्थलीं
स्वेनेभाजिनपल्लवेन झटिति प्रास्फोटयद्धूर्जटिः ॥ ३४ ॥

रावणः—

सर्वैर्यस्य समं समेत्य कठिनां वक्षस्थलीं संयुगे
निर्भग्नं मुखमेव दन्तमुसलैरैरावतस्योन्नतैः ।
हेलोत्क्षिप्तमहीध्रकम्पजनितत्रासाङ्गनालिङ्गन-
प्रातानन्दहरप्रसादमुदितश्चिन्त्यः स मेऽन्यो रिपुः ॥ ३५ ॥

---

नामेति प्रसिद्धौ । कपीन्द्रहैहयपती वाल्यर्जुनौ स्यातां संभावना । कीदृशौ अवगाढः सर्वातिरेकः अन्तरे मध्ये स्थेमा बलं ययोस्तौ सर्वातिबलाविति । "स्थेमातिबलधैर्ययोः" इति हैमी । परंतु तस्य दशकन्धरस्य स्कन्धप्रतिष्ठा पुनः अधुना महती जाता । कस्य धूर्जटिः शम्भुः यदंसस्थलीं यस्य स्कन्धप्रदेशं स्वेनात्मनैव इभाजिनं गजचर्म तस्य पल्लवस्थानि यानि करचरणादिचर्माणि तेन झटिति शीघ्रमेवास्फोटयत् । कीदृशीमंसस्थलीं सद्यः तत्क्षणोत्पाटिता रुद्रार्थं कृत्ता ये कण्ठास्तेषां कीकसस्य ये कणाः अस्थिकणास्तैराकीर्णाम् । " कीकसं कुल्यमस्थि च" इत्यमरः । वाल्यर्जुनसमयाद्‌द्व्यारूढबलोऽस्मीत्याशयः ॥ ३४ ॥

संयुगे ऐरावतस्येन्द्रगजस्य सर्वैर्दन्ता एव मुसलास्तैः समम् एकदैव कठिनां मदीयवक्षःस्थलीं समेत्य प्राप्य मुखस्याग्रभागमेव निर्भग्नं खण्डितं न तु वक्षःस्थलीति । एवं सोऽहमिति । कर्मान्तरमाह । सोऽहं हेलया मयैव क्षिप्तः यो महीध्रः कैलासस्तस्माद्यः क-

अङ्गदः—

रे रे रावण शम्भुशैलमथनप्रख्यातवीर्यः कथं
रामं योद्धुमिहेच्छसीदमखिलं चेत्तन्न युक्तं तथा ।
रामस्तिष्ठतु लक्ष्मणेन धनुषा रेखा कृता लङ्घिता
तच्चारेण च लङ्घितो जलनिधिर्दग्धा हतोऽक्षः पुरी॥३६॥

रावणः—

यन्मां त्वं वदसि प्रचूर्णितबलान्हेमाक्षदैत्येश्वरा-
ञ्छेषस्याप्यथ वा हिरण्यकशिपोर्भस्माङ्गदस्याङ्गद ।
अन्येषाममरद्विषां बलकथा मद्बाहुसारादलं
रामश्चेद्रिपुहा प्रियापहरणे सन्धिं विधत्ते कथम्॥ ३७ ॥

---

म्पस्तेन जनितस्त्रासो यस्याः एवंभूताया अङ्गनायाः पार्वत्याः आलिङ्गनेन प्राप्तानन्दो यो हरस्तस्य प्रसादेन मुदितस्तस्य मे अन्यो रामादन्यतरो रिपुश्चिन्त्यः । नतु वर्तमानोऽस्तीति ॥ ३५ ॥

अखिलं पूर्णम्।बलेनेति । लक्ष्मणेन धनुषा कृता या रेखा सापि त्वया न लङ्घिता तच्चारेण रामदूतेन हनुमता ॥ ३६ ॥

हे अङ्गद यत् त्वं मां प्रचूर्णितबलं वदसि तत्पूर्यताम् । रामादधिकबलोऽस्मीति भावः । काकाक्षिन्यायेनालमो योजनं सर्वत्र । मदैव हेमाक्षो हिरण्याक्षः तदादीन् दैत्येश्वरान् प्रतिबले या कथा सा मद्बाहुसारादलं पूर्यताम् । मद्बाहुबललेशस्तेष्वस्तीति भावः । अथानन्तरं शेषस्य हिरण्यकशिपोः भस्माङ्गदनाम्नो दैत्यस्य अन्येषाममरद्विषामन्येषां च बलकथा मद्बाहुसारादलं पूर्यताम् । स्वर्णाङ्गदस्येति पाठे स्वर्णं तस्याङ्गदे बाहुभूषणे यस्य हिरण्यकशिपोरिति हिरण्याक्षादिभ्योऽप्यहमेव बलीत्यभिप्रायः । अन्यत् सुगमम् ॥ ३७ ॥

अङ्गदः—

शिरोभिर्मा देवीः शिव इव न ते दास्यति पुनः
प्रबन्धं पश्याब्धेः सरस इव कैलाससुभट ।
हितं तु ब्रूमस्त्वां मम जनकदोर्दण्डविजय-
स्फुरत्कीर्तिस्तम्भस्त्यज कमलबन्धोः कुलवधूम् ॥३८॥

रावणः—

कस्त्वं वालितनूद्भवो रघुपतेर्दूतः स वालीति कः
को वा वानर राघवः समुचिता ते वालिनो विस्मृतिः ।
त्वां बध्वा चतुरम्बुराशिषु परिभ्राम्यन्मुहूर्तेन यः
संध्यामर्चयति स्म निस्त्रप कथं तातस्त्वया विस्मृतः ३९

अङ्गदः—

त्वद्दोर्दण्डप्रचण्डप्रतिहननविधिप्रौढबाह्वोः सहस्र-
च्छेदक्रीडाप्रवीणस्थिरपरशुमहागर्वनिर्वापकस्य ।

---

हे कैलाससुभट एतद्धरणपौरुष वयं तु अतस्त्वां प्रति हितं ब्रूमः शिरोभिर्मस्तकैः मा देवीर्मा क्रीड । शिव इव पुनः रामस्ते शिरांसि न दास्यति । यथा शिवार्थे भवतैव कृत्तानि शिरांसि शिवः पुनस्तुभ्यमदात् न तथा राम इति । अब्धेः प्रबन्धं प्रकृष्टं बन्धनं यस्य । कस्येव सरस इव कुतो हितं ब्रूमः । यतस्त्वं मदीयपितृभुजस्य जङ्गमः कीर्तिस्तम्भः यत्र यत्र त्वं प्रयासि तत्र तत्र वालिना बद्धोऽयमिति कीर्तिस्तम्भः । ननु किं हितं वदसि तदाह । कमलबन्धोः सूर्यस्य कुलवधूं सीतां त्यजेति ॥ ३८ ॥ ३९ ॥

रे वानराधम अतिकटुप्रलापी त्वं क इत्यपेक्षायामाह । तत्र स्वामिपित्रोरात्मैश्वर्यं दर्शयति । रे रक्षः अहं राघवस्य दूतोऽस्मि । कभूतस्य दोर्दण्डानां प्रचण्डं यत् प्रतिहननं बलैहारित्वं तस्य विधौ

दूतो हे राघवस्य त्वदपघनघृणावासवालाग्रलोम्नः
पुत्रः सुत्रामसूनोः प्लवगबलपतेर्नामतश्चाङ्गदोऽहम्॥४०॥

रावणः—

यद्भग्नाः किल बालतालतरवो रामेण सार्द्रत्वच-
श्छिन्नं यच्च पुरातनं शिवधनुस्तद्वीर्यमुद्दिश्यते।
नासीदेतदनागतं श्रुतिपथं स्वर्लोकधूमध्वजः
पौलस्त्यः करकन्दुकीकृतहरक्रीडाचलो रावणः ॥४१॥

शूराः श्रोत्रपथेषु नः कति कति प्राञ्चः पदं चक्रिरे
तेषामेव विलङ्घ्य साम्यसरणीं जागर्ति लङ्काभटः।
यद्दोर्मण्डलगाढपीडनवशान्निस्पन्दरक्तच्छटाः
शङ्कामङ्कुरयन्ति शङ्करगिरेरद्यापि धातुद्रवाः ॥ ४२ ॥

---

विधाने प्रौढं सगर्वं यत् बाह्वोः सहस्रं तस्य च्छेद एव क्रीडा तस्यां प्रवीणः स्थिरोऽतिधीरो यः परशुर्जामदग्न्यस्तस्य यो महान् गर्वस्तस्य निर्वापकस्य शामकस्य। "त्वद्भुजजयिहैहयभुजसहस्रच्छेत्तृपरशुरामजयिनः" इति ध्वनिः। पुनः सुत्रामसूनोरिन्द्रात्मजस्य वालिनः पुत्रोऽस्मि। किंभूतस्य वालिनः। त्वदपघनं त्वच्छरीरं तत्र या घृणा करुणा तया त्वदावासाय कृतानि पुच्छवालाग्रलोमानि येन तस्य त्वां कक्षागतं कृत्वा भुवं भ्रान्त्वा यदा गतस्तदा गतसंज्ञं त्वां ज्ञात्वा दृष्ट्वा वालाग्रलोमसु विश्रमितवान्। तस्य पुत्रोऽहमिति ॥ ४० ॥ ४१ ॥

नोऽस्माकं श्रोत्रपथेषु कर्णमार्गेषु कति कियन्तः शूराः पदं स्थानं चक्रिरे। श्रुता इति। नो इति पाठे कियन्तः कियन्तो वीराः पदं नो चक्रिरे अपि तु सर्व एव चक्रिरे इति तेषामपि समत्वं मार्गम्। किंविशिष्टाः शूराः प्राञ्चः। शौर्यपूज्यः को लङ्काभट इत्यपेक्षायामाह। यद्दो-

स्वेषूत्कृत्य हुतेषु मूर्द्धसु जवादग्नेः स्फुटित्वा बहि-
र्व्याकीर्णेष्वखिलेषु देवलिखितं दृष्ट्वापि रामार्पणम् ।
चित्तेनास्खलितेन यस्तदधिकं ब्रह्माणमप्रीणय-
त्तस्मै कः प्रथमाय मानिषु महावीराय वैरायते॥ ४३ ॥

वीरोऽसौ किमु वर्ण्यते दशमुखश्छिन्नैः शिरोभिः स्वयं
यः पूजार्थसमुत्सुको घटयितुं देवस्य खट्वाङ्गिनः ।
सूत्रार्थी हरकण्ठसूत्रभुजगव्याकर्षणायोद्यतः
साटोपं प्रमथैः कृतं भ्रुकुटिभिः स्थित्वान्तरे वारितः ४४॥

---

मण्डलेति। शङ्करगिरेः कैलासस्य धातवो गैरिकादयस्तद्भवा अवयवाः अद्यापि यस्य दोर्मण्डलेन गाढाक्रमणवशान्निःस्पंदं निःसृतं यद्रक्तं तस्य याश्छटाः प्रवाहास्तेषां शङ्कामङ्कुरयन्ति जनयन्ति ॥ ४२ ॥

तस्मै रावणाय कः पुमान्वैरायते न कोऽपीति। यः अस्खलितेनाव्यग्रेण चित्तेन तदधिकं पूर्वतोऽप्यधिकं यथा स्यात्तथा ब्रह्माणं प्रजापतिं रुद्रं वा अप्रीणयत्। उभयोः सृष्टिकारित्वात् ब्रह्मत्वम्। किं कृत्वा स्वेषु अखिलेषु मूर्धसु अग्नेः सकाशात् स्फुटित्वा बहिरपि कुण्डाद्बहिर्भागे व्याकीर्णेषु समन्ताद्विक्षिप्तेषु सत्सु देवलिखितं रामार्पणं रामायार्पणं रामादस्य कालो भविष्यतीति दृष्ट्वा "अर्पणं कालवासयोः" इति हैमी। किंभूतेषु मूर्द्धसु जवात् उत्कृत्य कण्ठादुत्पाट्य हुतेषु ४३

"खट्वाङ्गो नरमञ्जरी" इत्यमरः। सास्यास्तीति खट्वाङ्गी रुद्रस्तस्य स्वयं छिन्नैः शिरोभिः पूजार्थे समुत्सुकः पुनः सूत्रार्थे सूत्रप्रयोजनं घटयितुं कर्त्तुं हरकण्ठेभ्यः सूत्राकारो भुजगस्तदाकर्षणायोद्यतः प्रमथैः रुद्रगणैः साटोपं हास्यनर्त्तनामिति कृतम् अन्तरे रुद्ररावणयोरन्तराले स्थित्वा यैर्वारितः कण्ठसर्पं गृहीत्वेति असौ रावणः किं वर्ण्यते शिरःपुष्पमालार्थं कण्ठभूषणाकर्षणमिति भावः ॥ ४४ ॥

प्रतीहारः—( अत्रान्तरे प्रविश्य )

ब्रह्मन्नध्ययनस्य नैष समयस्तूष्णीं बहिः स्थीयतां
स्वल्पं जल्प बृहस्पते जडमते नैषा सभा वज्रिणः ।
स्तोत्रं संहर नारद स्तुतिकथालापैरलं तुम्बरो
सीतारल्लकभल्लभग्नहृदयः स्वस्थो न लङ्केश्वरः ॥ ४९ ॥

अङ्गदः—( क्रोधं नाटयति )

स्फूर्जद्दिव्यास्त्रबाहुव्यतिकरविगलत्कन्धरैस्तैः शिरोभि

प्रकरणार्थस्तु स्पष्ट एव । अथ वागर्थः प्रतिपाद्यते । परमभक्तो हनूमान् आगतान् ब्रह्मादीन् भक्तिं बोधयति। हे ब्रह्मन् एष रामः अध्ययनस्य अध्यापनेन वेदादिना समयः सम्यगयतीति समयो विषयः न अतः बहिर्देशे तूष्णीं स्थीयतां यद्दृश्यं तद्रामे न।"यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।" इत्युक्तत्वात्। हे जडमते बृहस्पते स्वल्पं यथा स्यात्तथा स्तोत्रं जल्प वद। एषा वज्रिणो रामस्य सभा भक्तगोष्ठी। कीदृशं स्तोत्रं संहारः प्रलयः नारदः नयन्ते विषयैर्विक्षिप्यन्ते नराः प्राणिनस्तेषां समूहो नारं तं ददाति प्रकटयतीति नारदः सृष्टिसमयः पालितैः पालकतया स्तूयते यस्यां सा स्तुतिः पालनाख्या संहारसृष्टिपालनात्मककथालापैर्नालं किं तु न पूर्णम्। हे तुम्बराख्यगन्धर्व अत्रैकारप्रश्लेषः।"एलोंपः" इति सूत्रेण। ईश्वरो रामः लङ्केश्वरेण अरल्लकः शिरःसिन्दूरसरणिः स एव भल्लकस्तेन भग्नो रावणस्तस्य हृत् नाशकोऽस्ति । तर्हि भयजनकः किन्नेत्याह। अयः शुभावहो विधिः भक्तजनमङ्गलं करोतीत्यर्थः।ननु सीतार्थं रावणघातात् किं कामी नेत्याह। स्वस्थः सदास्वरूप इत्यर्थः । प्रकरणार्थः अवगम्यते। "शिरःसिन्दूरसरणिः स्त्रीणां वै रल्लकः स्मृतः।" इति हलायुधः ॥ ४९ ॥

हे रावण अतिरुषाऽतिप्रचण्डकोपेनाङ्गदस्त्वामपि. किमद्यैव न हन्यात् अपि तु हन्यादेव। परं त्वद्धनने हेतुत्रयमस्ति तदाह । तात-

देवो रामः करिष्यत्युचितबलिमयं भूतसंघातशास्ता ।
हन्यात्किं नाङ्गदस्त्वामतिपरुषरुषा तातकक्षावशिष्टः
प्रोद्धृत्योद्धृत्य पादप्रहतबहुशिरः कन्दुकैः क्रीडितोऽस्मि ॥
अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तरः ।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवः ॥४७॥
मूर्ध्नामुद्धृत्य कृत्ताविरलगलगलद्रक्तसंभूतधारा-
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।

---

कक्षावशिष्टोऽसि यस्तातेनानुकम्पया त्यक्तस्तमहं न हन्मीति अहमपि प्रोद्धृत्योद्धृत्य उच्चैराक्षिप्योत्क्षिप्य पादाभ्यां प्रहतानि ताडितानि शिरांस्येव कन्दुकास्तैः क्रीडितः पादप्रहतानि बाणैर्न हन्तव्यानीति अतोऽहं स्वक्रीडनकभञ्जनेन लोकापवादभयान्न हन्मीति भावः॥ ननु स्वामिद्वेष्टा हन्तव्य एवेति चेत्तत्राह । देवो रामः ते शिरोभिः उचितबलिं करणीयं दिक्पालबलिं करिष्यत्यतो नाहं हन्मि । किंभूतैः स्फूर्जन्ति दिव्यास्त्राणि यत्र तस्य बाहो रामभुजस्य यो व्यतिकरः कोपस्तेन विगलन्त्यः कन्धराः येषां तैः। ननु बलिप्रदातेनास्य किं भविष्यति तत्राह। भूतानां सङ्घातं समूहं शासितुं शीलं यस्य सः । अन्यानपि बलिदानक्रियायां शिक्षयितुमिति ॥ ४६ ॥

अप्यर्थगौरवेण रावणं रामं स्मारयति—अस्तीति॥ सुगमम् ॥४७॥

मूर्ध्नां कर्त्तनसाहसेन दोष्णां भारोद्धरणगर्वेण यस्त्वं नगरीरक्षणं कर्त्तुमर्हसि चेत्तत्राह । हे रावण एषां मूर्ध्नां मस्तकानां च पुनः दोष्णां विंशतिभुजानां च फलमिदं भारोद्धरणं चेति । तदेव फलं द्योतयति। उद्धृत्य स्कन्धादुत्पाट्य कृत्ताः खण्डिता अविरलाः निबिडाः गलाः कण्ठास्तेभ्यो गलद्यद्रक्तं तस्य प्रभूता प्रचुरा या धारा तया धौतौ प्रक्षालितौ ईशस्य रुद्रस्याङ्घ्री तयोः प्रसादेनोपनतः प्राप्तो यो जयस्तेन जगति ज्ञातः मिथ्यैव महिमा येषां मूर्ध्नाम् । किंभूतानां दोष्णां कैलासस्य गिरेर्या उल्लासनेच्छा तदु-

कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषामिदं ते फलमिह नगरीरक्षणे यत्प्रयासः४८॥
सीतां मुञ्च भजस्व रामचरणं राज्यं चिराद्भुज्यतां
देवाः सन्तु हविर्भुजः परिभवं मा यातु लङ्कापुरी।
नो चेद्वानरवाहिनीपतिमहाचञ्चच्चपेटोत्तरै-
स्तत्तन्मुष्टिभिरङ्गसङ्गरगतस्तत्तत्फलं लप्स्यसे॥ ४९॥
दृष्टः किं रघुनन्दनो न हि पुरा किं च त्वया न श्रुतोऽ-
रण्ये किं न विलम्बितोऽसि न पुनर्मार्गे स्थितोऽसि क्षणम्।
तल्लङ्केश्वर मुञ्च मानमखिलं श्रुत्वा वधं वालिनः
सीतामर्पय रक्ष राक्षसकुलं दासत्वमङ्गीकुरु॥ ५०॥

क्षेपकः। रावणः—

मरुत्वद्दम्भोलिक्षणघटितघोरश्वयथुना
निसर्गोदग्रेण प्रसभमुरसा पीतगगनः।

---

द्धरणेच्छा तस्याः यो व्यतिकरः अशौर्ये शौर्यारोपः तस्य पिशुनः सूचको यः उत्सर्पी प्रसारणशीलो दर्पस्तेनोद्धुराणां प्रचण्डानाम् एवंभूतानां मूर्ध्नां दोष्णां च फलम् इदमेव शिरःकर्त्तनं साहसं भारोद्वहनप्रौढिश्चेति। इह मदागमने यन्नगरीरक्षणं फलं स प्रयासः श्रम एवेति भावः॥ ४८॥

वानराणां वाहिनीपतयो हनूमदादयस्तेषां महान्तः चञ्चन्तः पेशला ये चपेटाः करतलप्रहारास्तेषामुत्तरैरुपर्युपरि कन्दुकवद्भ्रान्तिभिर्मुष्टिभिः तत्तत्फलं तस्य तस्यानयस्य फलं लप्स्यसे प्राप्स्यसि॥ ४९॥ ५०॥

भो अङ्गद त्वं स्मरसि अयं मल्लक्षणो दशमुखः वीरः कथमासीत् एतदेव वीरत्वं बोधयति। किं कुर्वन् देवद्रीचीं देवानञ्चति

श्रियं देवद्रीचीं निजभुजवनोद्दामकरिणी-
मयं कुर्वन् वीरः स्मरसि कथमासीद्दशमुखः ॥५१॥
आस्कन्धादपि कण्ठकाण्डविपिने द्राक् चन्द्रहासासिना
छेत्तुं प्रक्रमिते मयैव झटिति त्रुट्यच्छिरःसंततौ ।
अस्मेरं गलिताश्रुगद्गदवचो भग्नभ्रुवा यद्यभू-
द्वक्त्रेष्वेकमपि स्वयं स भगवांस्तन्मे प्रमाणं शिवः ॥५२॥
येऽहंपूर्विकया प्रहारमभजन्मां छिन्धि मां छिन्धि मां
छिन्धीत्युक्तिपराः पुरारिपुरतो लङ्कापतेर्मौलयः ।

---

गच्छति पूजति वा देवद्रीची तां देवश्रियं प्रसभं यथा स्यात्तथा निजभुजा एव वनं तत्रोद्दामकारिणीं मत्तमतङ्गजीं कुर्वन् सन् "देवानञ्चति देवद्र्यङ्" इत्यमरः । यथा गजी वनमाश्रयति तथेयं निसर्गोदग्रेण स्वभावादुन्नतेनोरसा पीतगगनः आश्लिष्टाकाशः । कीदृशेनोरसा मरुत्वानिन्द्रस्तस्य दम्भोलिर्वज्रं तेन यो क्षणः योगस्तेन घटितो निर्मितः घोरश्वयथुः शोथो यत्र तेन वज्रादपि शोथमात्रयुक्तं न क्षतम् ॥ ५१ ॥

पुनरात्मनो रौद्ररसावेशमाविष्करोति—आस्कन्धादिति ॥ स्कन्धमभिव्याप्य कण्ठा एव काण्डा वृक्षस्कन्धास्तेषां विपिने दशशिरोरूपे मयैव चन्द्रहासासिना च्छेत्तुं प्रक्रमिते कर्त्तनप्रापिते सति । कीदृशे झटिति शीघ्रं त्रुट्यन्ती शिरःसंततिः शिरोनाडीपरम्परा यस्य एवं सति दशसु वक्त्रेषु एकमपि वक्त्रं मुखं यदि अस्मेरं स्मितरहितं गलिताश्रु त्यक्ताश्रु वा गद्गदवचो वा भग्नभ्रु भग्ना वक्रा भ्रूर्यत्र तत् अभूज्जातं तत्तत्र शिवः स्वयमेव प्रमाणं साक्षी । एतेनातिरभसो द्योतितः । गद्गदो भयहर्षाभ्याम् अत्र भयात् वयमेतादृशाः शूराः शिरसां कर्त्तने च्छेदेऽपि न कातरा इति भावः ॥ ५२ ॥

ये मूर्धानः अहंपूर्विकया "अहं पूर्वमहं पूर्वमित्यहंपूर्विका मता ।" इति ।

ते भूमौ पतिताः पुनर्नवभवानालोक्य मूर्ध्नोऽपरा-
न्याचिष्यन्त इमे हि नो वयमिति प्रीत्याट्टहासं व्यधुः॥५३॥
मूले पञ्च ततश्चतुष्टयमिति स्रक्सन्निवेशैः शिरः-
पुष्पैरन्यतमावलोकनमितैरुच्छोणितैरञ्चति।
हस्तस्पर्शवशेन मूर्ध्नि दशमं मूर्धानमालोकयन्
शम्भोरद्भुतसाहसैकरसिकः कैर्न स्तुतो रावणः॥ ५४ ॥
लङ्केन्द्रः समधीरवीरपदवीरम्यो न गम्यो गिरां
तस्मिन् जुह्वति चन्द्रहासशकलान्मौलीन् पुरारेः पुरः।

---

प्रहारमभजन्। पुरारेः रुद्रस्य भूमौ पतिताः सन्तः ते मौलयः पुनः मम नवभवान् मूर्ध्नः अवलोक्य इति प्रीत्याट्टहासं व्यधुः कृतवन्तः। इति किम् इमे नवभवं रुद्रं वरं याचिष्यन्त वयं नेति एवंभूतः साहसिकोहमिति भावः। सभयामर्षः पुनः पुनस्तदेव प्रलपतीति विज्ञेयम् ॥ ५३ ॥

अद्भुतो यः साहसस्तस्मिन्नेको रसो यस्य सः एवंभूतो रावणः कैर्न स्तुतः अपि तु सर्वैरेव। द्युसद्भिः स्रजि मालायां सन्निवेशो येषां तैः शिरःपुष्पैः शिरांस्येव पुष्पाणि तैः शम्भोः रुद्रस्य मूर्ध्नि अञ्चति सति हस्तस्पर्शवशेन इति दशमं मूर्धानं स्वकीयमालोकयन्। इति किं मूले पञ्च शिरांसि तत अग्रे चतुष्टयं शिरश्चतुष्कम् अतश्चतुष्टये पञ्चमं शिरो मृग्यते। कीदृशैः अन्यतमो दशमस्तदवलोकनमितैः प्राप्तैः वयं नवैव दशमः कुत्रेति पुनः पुनः उच्छोणितैः उद्गलद्रक्तैः ॥ ५४ ॥

एषः लङ्केन्द्रो रावणः समाश्च ते धीराश्च साधारणधीराणां मध्ये ये वीराः वीरत्वेनोत्कटास्तेषां पदव्यां मार्गे रम्यः स्पृहणीयः धीरा वीरा अपि यं स्पृहयन्ति। गिरिस्त्रिकूटाख्यः रम्यो न दुर्गवर्त्मनास्य धीरत्वमिति न। तस्मिन् रावणे पुरारेः रुद्रस्य पुरः अग्रे

भीत्या मन्दशिखोदयोऽपि दहनस्तैरेव तत्र क्षणं
प्राणाद्यैश्च दिदृक्षया तनुतनुश्वासानिलैर्दीपितः॥ ५५ ॥

अङ्गदः—( सावज्ञम् )

आस्तां मस्तकहोमविक्रमकथा पौलस्त्यविस्तारिणी
देहं किन्न निपातयन्ति दहने वैधव्यभीताः स्त्रियः।
कैलासोद्धरणेन भारवहनप्रौढिस्त्वयाऽऽविष्कृता
तूर्णं वर्णय किं च किं चिदपरं यत्पौरुषस्यास्पदम्॥५६॥
दोर्दण्डाहितपौत्रभिक्षुरभवद्यस्मिन्पुलस्त्यो मुनि-
स्तद्बाह्वोर्वनमच्छिनत् परशुना यो राजबीजान्तकः।
शौर्यं शौर्यरसाम्बुधेर्भृगुपतेर्ग्रासोऽपि नासीज्जलं
तत्तेजो वडवानलस्य किमसौ लङ्कापतिः पल्वलम्॥५७॥

---

चन्द्रहासकृतखण्डान् मौलीन् जुह्वति सति दहनोऽग्निर्भीत्या रावण-शिरांसि कथं दहेयामिति भीत्या मन्दशिखोदयः मन्दज्वालोदयः पुनः तैरेव प्राणाद्यैरिन्द्रियगणैर्दिदृक्षया कथमेतानि शिरांसि आत्मानं दाहयन्तीति ज्ञानेक्षया मन्दं मन्दं श्वासानिलैर्दीपितः इन्द्रियाणां क्षणं निराश्रयावस्थानत्वात्तैरेव कृत्ताशिरः संचारं कृत्वाऽग्निरुद्दीपित इति भावः ॥ ५५ ॥

रावणस्य विक्रमद्वयमस्ति मस्तकहोमः कैलासोद्धरणं चेति। तत्त-द्द्वयं निराकरोति—आस्तामिति ॥ सर्वं सुगमम् ॥ ५६ ॥

तदसन्धिं ज्ञात्वा जिगमिषुरङ्गदो रामवीर्यं स्मारयति—दोर्दण्डेति॥ यो राजबीजान्तकः क्षत्रसन्तानसंहर्त्ता जामदग्न्यः परशुना कुठारेण यद्बाहुवनं यस्य राज्ञः भुजवनम् अच्छिनत् अलुनात् बाह्वोर्वनमि-ति निपातः सिद्धः कामधेनौ। तस्य कस्य यस्मिन् राजन्यर्जुने पुलस्त्यो मुनिर्दोर्दण्डस्याहितः प्रापितः बद्धो यः पौत्रो विश्रवः-

रे रे राक्षसराज मुञ्च सहसा देवीमिमां मैथिलीं
मिथ्या किं निजपौरुषस्य घटनाप्रागल्भ्यमारभ्यते ।
एनां पश्यसि किं न किन्नरगणैरुद्गीतदोर्विक्रमां
सेनां वानरभर्तुरुद्भटभुजस्तम्भाग्र्यभीमां पुरः ॥ ५८ ॥

( इति लङ्काभटमुत्कटवाक्यैरधिक्षिप्य लङ्कामातङ्कय-न्नङ्गदो निष्क्रान्तः।)

इति श्रीहनुमन्नाटके अष्टमोऽङ्कः ॥ ८ ॥

## अथ नवमोऽङ्कः ।

अथ निजप्रतापप्रचण्डचण्डसमरोत्साहपरिपूर्णस्य लङ्कापतेः-

श्रुत्वा दाशरथिं सुवेलकटके साटोपमर्धे धनु-
ष्टङ्कारैः परिपूरयन्ति ककुभः प्रोच्छन्ति कौक्षेपकान् ।

स्तुतो रावणस्तन्मोचनाय भिक्षुरभवत् पौत्रजीवनदानभिक्षां याचितवानिति । तस्य शौर्यरसाम्बुधेर्वीररससागरस्य भृगुपतेः शौर्यमेव जलं तत्तेजो वडवानलस्य रामप्रतापवडवाग्नेः ग्रासश्चुलकमात्रमपि नासीत् । असौ पल्वलमल्पसरः लङ्कापतिः किं न किमपीति । एतदन्तरं त्वद्रामशौर्ययोः इति भावः ॥ ५७ ॥

एवं रामवीर्यमाश्राव्य तदनुगवीर्यं श्रावयति-रे रे राक्षसेति ॥ वानरभर्त्तुः सुग्रीवस्य उद्भटा योद्धारो ये वानरास्तेषां भुजा एव स्तम्भाग्र्याः मुख्यस्तम्भास्तैर्भयावहम् । अन्यत् सुगमम् ॥ ५८ ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकटीकायामष्टमोऽङ्कः ८

"कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः। सुवेलाख्यगिरिनितम्बप्र-

अभ्यस्यन्ति तथैव चित्रफलकैर्लङ्कापतेस्तत्पुन-
र्वैदेहीकुचपत्रवल्लिरचनावैदग्ध्यमर्धे कराः ॥ १ ॥

( ततो निजराजमन्दिरशिखरस्थमञ्चमारुह्य )

लङ्कायां कृतवानयं हि विकृतिं दग्धाग्रपुच्छः पुरा
कोऽप्येषः प्रतिभाति वालिसदृशो नूनं तदीयः सुतः ।
श्यामः कामसमाकृतिः शरधनुर्धारी स सीताप्रियः
प्रत्येकं रिपुमीक्षतीति निगदन्मञ्चस्थितो रावणः ॥ २ ॥

---

देशे साटोपं यथा स्यात्तथा लङ्कापतेरर्धे कराः दश हस्ताः धनुष्टङ्कारैः ककुभः परिपूरयन्ति । तथा कौ क्षिप्यन्ते इति कौक्षेपकाः बाणास्तान् प्रोच्छन्ति विमलीकुर्वन्ति पुनरर्द्धे कराः चित्रफलकैः चित्राकृतिभिस्तत्प्रसिद्धं वैदेहीकुचपत्रवल्लिरचनावैदग्ध्यम् अभ्यस्यन्ति । अथ वागर्थः प्रतिपाद्यते । "करः कीनाशवानरहस्तयोः" इति हैमी । अर्धे कराः अर्धे वानराः श्रुत्वा संस्थाप्य "श्रुक्ष निष्ठायाम्" इति कामधेनौ । पूर्वार्द्धः पूर्ववदन्ये चित्रफलकैः चित्रितभल्लैः "फलमाकृतिभल्लयोः" इति हैमी । लङ्कापतेः कुचपत्रवल्लिरचनावैदग्ध्यं कुर्वन् "कुच संकोचे" इति कामधेनौ । रावणस्य संकोचाय वै पत्रवल्लिरचना चन्दनमालानिर्मितवैदग्ध्यम् । यथा चन्दनमालया मण्डपादिरवरुध्यते तथास्य रोधनविधानमिति । "प्राण्युत्साहौ तु देहिनौ" इति शाश्वतः । "लक्ष्मीरीकार उच्यते" इत्येकाक्षरी । रावणोत्साहशोभासंकोचाय पत्रवल्लीरचनावैदग्ध्यमिति वै निश्चयेन ॥ १ ॥

एषः पुरा लङ्कायां विकृतिं दाहरूपां कुतो ज्ञातमित्यत आह । दग्धाग्रपुच्छः एषः कपिः प्रतिभाति । तदीयः सुतः वालिपुत्रः कथं ज्ञात इत्यत आह । वालिसदृश इति । शरधनुर्धारी कः सीताप्रियः । प्रत्येकं रिपुमीक्षतीति निगदन्निति स्वयमेव वितर्क्य निगदन् सन् रावण ईक्षतीति ज्ञेयम् ॥ २ ॥

तत्र मन्दोदरी—

दृष्ट्वा राघवमेव राक्षसवनस्वच्छन्ददावानलं
जानक्यां निजवल्लभस्य परमं प्रेमाणमालोक्य च ।
काङ्क्षन्ती मुहुरात्मपक्षविजयं भङ्गं च मुग्धा मुहु-
र्धावन्ती मुहुरन्तरालपतिता मन्दोदरी सुन्दरी ॥ ३ ॥

वन्दारुवृन्दारकवृन्दबन्दिमन्दारमालामकरन्दबिन्दून् ।
मन्दोदरीयं चरणारविन्दरेणूत्करान्कर्करतामनैषीत् ॥ ४ ॥

मन्दोदरी—( अञ्जलिं बद्ध्वा रावणं वैरिविद्रावणं विज्ञापयति । ) देव ।

त्वं बाहूद्धृतचन्द्रशेखरगिरिर्भ्राता जगद्भक्षकः
पुत्रः शक्रजयीत्यवेत्य रणधीर्नूनं बली वालिजित् ।

---

राघवमेवेत्यैवपदेनासहायत्वं द्योतितम् । मुहुः आत्मपक्षविजयं कांक्षन्ती चकारान्मुहुः परपक्षभङ्गं कांक्षन्ती मुहुर्धावन्ती अन्तरालपतिता आसीदिति शेषः । अत एव मुग्धाऽज्ञा देवमजानतीत्यर्थः । कदाचिद्गृहे कदाचिद्रावणाभ्याशे एष एवान्तरालः एकत्र स्थित्यभावादिति ॥ ३ ॥

धावनमेव द्योतयति । इयं मन्दोदरी आत्मचरणारविन्दगतरेणूत्करान् कर्करतामनैषीत् प्रापयामास । किंविशिष्टान् "वन्दारुरभिवादके" इत्यमरः । वन्दारूण्यभिवादकानि यानि वृन्दारकवृन्दानि देवसमूहास्तेषां या बन्दी रुद्धस्त्रीगणस्तच्छिरःस्थिता या मन्दारमाला पारिजातपुष्पस्रक् तस्या मकरन्दबिन्दवो येषु मकरन्दरेणुयोगात् कर्करत्वम् । यच्चरणारविन्देति पाठे यस्य रावणस्य चरणारविन्दे ये रेणूत्करास्तान्वृन्दारकाणां बन्दीरुद्धदेवगणानां चरणपीडनान् मकरन्दबिन्दवः मन्दोदरीधावनाद्व्रणवः ॥ ४ ॥

मन्दोदरी लङ्कायां तत्रापि मन्दिरे तत्रापि रहसीति वचनमुवाच

तद्राजन्नबला बलादपहृता देयास्य सा जानकी
लङ्कायां रहसीत्युवाच वचनं मन्दोदरी मन्दिरे ॥ ५ ॥

रावणः—( निजभुजाडम्बरं नाटयति )

किं ते भीरु भिया निशाचरपतेर्नासौ रिपुर्मे महान्
यस्याग्रे समरोद्यतस्य न सुरास्तिष्ठन्ति शक्रादयः ।
मद्दोर्दण्डकमण्डलोद्धृतधनुःक्षिप्ताः क्षणान्मार्गणाः
प्राणानस्य तपस्विनः सति रणे नेष्यन्ति पश्याधुना॥६॥

मन्दोदरी—( सभयं रावणोदितपद्यार्थमपश्यन्ती भाविना द्वितीयं पद्यार्थमवगम्य ) अहो प्राणनाथ लङ्केश्वर किमिति स्वकपोलकल्पितैरमङ्गलालापैरात्मनो वधं मन्यसे ? ( शान्तं पापं प्रतिहतममङ्गलमिति वैचित्र्यमुत्पाद्य )

---

तदेवाह । हे देव कान्तत्वमिति अवेत्य ज्ञात्वा रणधीः रणोत्कटधीः तथापि वालिजित् त्वद्विपक्षवालिजेता रामो बलीति सगर्भाक्षेपः । इति किं बाहूद्धृतरुद्रालयोऽहं जगद्रक्षको भ्राता इन्द्रविजयी पुत्र इति तत्तस्मात्पूर्वं सैवाबला ततोऽपि वनाच्छलादपहृता न प्रत्यक्षम् अतो रामाय देयेत्यभिप्रायः ॥ ५ ॥

हे भीरु भयशीले ते भिया किं न किमपीति । राक्षसाधीशस्य मे असौ रामो महान् रिपुर्न । यस्य ममाग्रे अस्य तपस्विनः रामस्य प्राणान् सुगमम् । तमेवाह । असौ ना पुमान् रामः महान् रिपुरस्ति रामस्याग्रे मद्भुजमण्डलोद्यद्धनुः ततः प्रेरिताः अस्य तपस्विनः रिपुघातिनो रामस्य मार्गणा मम प्राणान् नेष्यन्ति अतो भिया किमितीत्यवगम्य ॥ ६ ॥

एकः सुग्रीवभृत्यः कपिरखिलवनं पत्तनं चापि दग्ध्वा
यातस्तूष्णीं तदानीं दशमुख भवतः किं कृतं वीरवर्गैः ।
प्राप्तोऽसौ पत्तनान्तं सकलकपिबलर्वारिधिमुल्लङ्घ्य योद्धुं
त्वं सीतां मुञ्च मुञ्चेत्यनिशमकथयत्प्रेयसी रावणस्य ॥७॥

मन्दोदरीकथनेन किंचित्सभयो रावणः—

शुकं च सारणं वीरं दूतं प्रस्थाप्य रावणः ।
रामदेवस्य शिबिरं मन्त्रं चक्रेऽथ मन्त्रिभिः ॥ ८ ॥

तत्र विरूपाक्षनामा मन्त्री—( सहितम् )

देव त्वां प्रति सम्प्रति प्रतिभटप्रोल्लासनं नो मुदे
देवायं प्रतिपद्यते हितमिदं यस्माद्वयं मन्त्रिणः ।
सीतारक्षणदक्षलक्ष्मणधनुर्लेखापि नोल्लङ्घिता
हेलोल्लङ्घितवारिधिः कपिकुलैः सार्द्धं स रामो महान् ॥९॥

यावद्दाशरथेर्न पश्यसि मुखं यावन्न पाथोनिधिं
बद्धं यावदिमां न पावकवशां लङ्कां निरस्तालकाम् ।

---

एकः असहायः तत्रापि सुग्रीवभृत्यः रामभृत्यभृत्य इति । पत्तनं नगरं वनं दग्ध्वा तूष्णीं गतवान् वागाडम्बरं यथा स्यात्तथा यातः गतः । तदा भवतो वीरवर्गैः वस्तुतस्त्वयापि किं कृतं न किमपीति । असौ रामः । सुगमम् ॥ ७ ॥

शिबिरं कटकम् ॥ ८ ॥

सम्प्रति विपत्काले प्रतिभटाः शत्रवस्तान् प्रति प्रोल्लासनं युद्धाय परप्रेरणं नोऽस्माकं मुदे न । अमुत्र हानादिहापयशः परत्र निरयावहं चेति । तत्र बलाबलाख्यानेन हितमेव द्योतयति । सीतेत्यबलत्वं हेलोल्लङ्घितेति बलवत्त्वम् । अन्यत् सुगमम् ॥ ९ ॥

ननु रामं परीक्ष्य दास्यामीति चेन्न अद्यैव देहीत्याशयेनाह—

यावन्नैव निजानुजं सुचरितं यातं कुलाङ्गारतां
तावद्रावण लोकपाल तरसा सीतां प्रयच्छानघाम् ॥ १० ॥

रावणः—( साश्चर्यम् )

एते ते मम बाहवः सुरपतेर्दोर्दण्डकण्डूहराः
सोऽहं सर्वजगत्पराभवकरो लङ्केश्वरो रावणः ।
सेतुं बद्धमिमं शृणोमि कपिभिः पश्यामि लङ्कां वृतां
जीवद्भिर्न हि दृश्यते किमथवा किं वा न वा श्रूयते ॥ ११ ॥

विरूपाक्षः—राजन् विषादं मा गाः । पश्य ।

आज्ञा शक्रशिरोमणिप्रणयिनी शस्त्रग्रहाणामपि
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
संभूतिर्द्रुहिणान्वये च तदहो नेदृग्वरॉल्लभ्यते
स्याच्चेदेष न रावणः क नु पुनस्त्वेकत्र सर्वे गुणाः ॥ १२ ॥

रावणः—( धैर्यमवलम्ब्य )

---

यावदिति ॥ पश्यसीति प्रत्येकमनुबध्यते । निरस्ता अलका राक्षस्यो यस्यां निजानुजं बिभीषणं सुमन्त्रोपदेशकर्तृत्वात्सुचरितमित्युक्तम् । ननु यावज्जीवं तामनुभवामि ततो न मुञ्चामीति चेन्न । अनघां निष्पापाम् ॥ १० ॥

एत इति ॥ जीवद्भिः चिरशरीरधारणावद्भिः अथवा दर्शनाभावे किन्न श्रूयते । हा द्वयार्थे । वाद्वयं वा वा कष्टं कष्टम् । " हन्तहावावताः समाः " इति हैमी ॥ ११ ॥

आज्ञेति ॥ शक्रशिखामणिः मुकुटोपरिमणिवत् भासमाना शस्त्रग्रहाणां ये बलेन शस्त्रग्राहिणस्तेषामपि प्रणयिनी सादरं ग्राह्या तवाज्ञा लङ्केति पदं वासस्थानं द्रुहिणो ब्रह्मा तदन्वये ब्रह्मपौत्रविश्रवसः संभूतिर्जन्म ॥ १२ ॥

मतिर्विपश्चितां मन्त्री रतिर्मन्त्री विलासिनाम् ।
पराक्रमैकसाराणां मानिनां त्वसिवल्लरी ॥ १३ ॥
अथ महोदरो नाम मन्त्री–
राजन्मुखसुखा वाचो मधुराः कस्य न प्रियाः ।
तव क्षोदक्षमाः किं तु नैता व्यसनसंगमे ॥ १४ ॥
प्रिया वा मधुरा वाक् च हर्म्येष्वेव विराजते ।
श्रीरक्षणे प्रमाणं तु वाचः सुनयकर्कशाः ॥ १५ ॥
विभवे भोजने दाने तिष्ठन्ति प्रियवादिनः ।
विपत्तौ चागतेऽन्यत्र दृश्यन्ते खलु साधवः ॥ १६ ॥
अग्रे प्रस्तुतनाशानां मूकता परमो गुणः ।
तथापि प्रभुभक्तानां मौखर्यादिदमुच्यते ॥ १७ ॥

---

मतिरिति ॥ " शास्त्रविचारसमुत्थं निर्धारणमार्थतो मतिर्मता विबुधैः ।" इति रसोदधौ । विपश्चितां ज्ञानिनां विलासिनां कामिनां मानिनां चित्तोन्नतिमताम् असिवल्लरी खड्गधारा अतोऽस्माकं बाहुरेव मन्त्री भवन्मन्त्रस्तु ज्ञात एवेति भावः ॥ १३ ॥

तत्र रण एव मन्त्र इति निर्णीतमाक्षिपति–राजन्निति॥ मुखसुखाः वाचैव सुखं येभ्यस्तेषां वाचः सुखाः । किमाक्षेपे। ताः वाचः एताः वाचः व्यसनसङ्गमे दुःखागमे सति तव क्षोदक्षमाः दुःखसहा न । "क्षोदं संकटचूर्णयोः " इति हैमी । यद्वा । व्यसनसङ्गमे द्यूतपानाक्षस्त्रीमृगयादिवास्वापादयो व्यसनानि तद्योगे यद्वा मुखसुखाः वाचो मधुराः ॥ १४ ॥

प्रिया इति ॥ श्रीरक्षणे राज्यैश्वर्यपालने । सुगमम् ॥ १५ ॥

विभवे इति॥ विपत्तौ सत्याम् अन्यत्र नीवृदनन्तरं वा गते सति १६॥

त्वं तु मन्त्रदानानर्होऽसीत्याह–अग्रे इति ॥ शीघ्रगतमरणानां

यैरेव स्तुतिभिः स्वामी नाप्यते व्यसनाटवीम् ।
पश्चान्मूकत्वमापन्नैरुद्धर्तुं शक्यते कथम् ॥ १८ ॥
नद्यश्च खलमैत्री च लक्ष्मीश्च नियतिर्द्विषाम् ।
सुकुमाराश्च वनिता राजन्नस्थिरयौवनाः ॥ १९ ॥
दत्तोत्साहैरकार्येऽपि चित्तग्रहणकोविदैः ।
सत्यं विदग्धैर्भुज्यन्ते नृपाः कर्णान्तषट्पदैः ॥ २० ॥
पद्मिनी कान्तिमापेदे संकोचं च कुमुद्वती ।
न भवन्ति चिरं प्रायो सम्पदो विपदोऽपि वा ॥ २१ ॥

तथा च ।

सुरेज्यादिभिराचार्यैर्नीतिशास्त्रं त्रिधा मतम् ।

---

तथापि प्रभुभक्तानां प्रभुप्रियकारिभिर्मन्त्रिभिः मौखर्याद्धाष्टर्चात् इदं वक्ष्यमाणम् ॥ १७ ॥

यैरिति ॥ यैर्मन्त्रिभिः । असद्गुणारोपणं स्तुतिः । "अटवी वनपङ्क्योः" इति हैमी । दुःखं पङ्कं पङ्कादुद्धर्तुम् ॥ १८ ॥

ननु भवन्तु व्यसनानि तरुणीयं कथं त्याज्येत्यत आह—नद्य इति ॥ द्विषन्तीति द्विषः निर्निदानाः प्रियकर्त्तारः यादृशास्तेषां नियतिर्भाग्यम् ऐश्वर्यं यौवनमभिवृद्धिः ॥ १९ ॥

दत्तेति ॥ त्वदन्तेऽपि ज्ञात्वा कथयति । अकार्ये अनुपस्थितकृत्ये यद्वा अकरणीये कर्मणि विदग्धैः कर्णान्तषट्पदैर्मधुकरमालावत् कर्णाभ्यर्णरसिकैः । चित्तग्रहेति पाठः ॥ २० ॥

नन्विन्द्रादिजयिनो मम के वानरा इति चेत्तत्राह—पद्मिनीति॥ दिवा पद्मिनी कान्तिमापेदे कुमुद्वती संकोचम् । रात्रौ कुमुद्वती कान्तिमापेदे पद्मिनी संकोचमेवं क्षणाद्विपदः क्षणात्सम्पदः अतस्तवाद्य विपत्काल इति भावः। मन्त्रामननत्वादैश्वर्यातिशयत्वाच्च । "पतनान्ताः समुच्छ्रयाः" इत्युक्तत्वात् ॥ २१ ॥

सुरेज्येति ॥ सुरेज्यो गुरुः ऐहिकम् इहैव सुखदम् आमुष्मिकं

ऐहिकं चामुष्मिकाख्यमैहिकामुष्मिकं तथा ॥ २२ ॥
ऐहिकामुष्मिकं तत्र शास्त्राणामुत्तमोत्तमम् ।
आमुष्मिकं तूत्तमं स्यादैहिकं चाधमाधमम् ॥ २३ ॥
यज्ज्ञानात्स्वामिनं हत्वा भजन्ते मन्त्रिणः प्रियम् ।
विषशस्त्रादिभिः शास्त्रं तदैहिकमिति स्मृतम् ॥ २४ ॥
तुल्यः सूर्यद्विजवधैराज्ञाभङ्गो महीभुजाम् ।
तद्वधे यद्भवेत्पापं न शेषो वक्तुमर्हति ॥ २५ ॥
अपराधं विना मन्त्री प्रभुना पीडितोऽपि सन् ।
न वैरूप्यं क्वचिद्याति तदमुष्मिकमुच्यते ॥ २६ ॥

---

पारलौकिकम् । ऐहिकामुष्मिकम् इहामुत्र सुखदम् ॥ २२ ॥

एषां न्यूनाधिकभावमाह—ऐहिकेति ॥ शास्त्राणां नीतिव्यञ्जकग्रन्थानां मध्ये ॥ २३ ॥

अथ शास्त्रत्रयलक्षणमाह—यदिति॥मन्त्रिणो राज्यार्हाः भ्रात्रादयः विषदानशस्त्रादिहननम् आदिग्रहणात्तद्विपक्षाश्रयणं चेत्यादिभिर्मारणोपायैः ॥ २४ ॥

नन्वेवं चेत् राज्यप्राप्तिस्तर्हि सर्वे किं न कुर्युरित्यत आह—तुल्य इति ॥ येषां महीभुजामाज्ञाभङ्ग एव सूर्यद्विजवधैस्तुल्यः वेदमार्गोच्छेदः सूर्यवधः तदधिष्ठातृत्वात्सूर्यस्य। सूर्या इति पाठे सूर्या नवोढा स्त्री।वधैरिति बहुवचनात् । वधावृत्तय आक्षिप्यन्त इति तद्वधे तेषां राज्ञां वधे शेषः सहस्रवदनोऽपि अतः कारणादैहिकं नीतिशास्त्रम् अधमाधममित्युक्तम् ॥ २५ ॥

अथामुष्मिकमुच्यते—अपराधमिति॥ स्वाधिकारप्रमादोत्थः अपराधस्तद्विना पीडितः कुवाक्दरिद्रादिप्रापितः । वैरूप्यं मन्त्रिभावाभावम् ॥ २६ ॥

राज्यग्रहणशक्तोऽपि मनसापि न चिन्तयेत् ।
सचिवः स्वामिनो नाशमैहिकामुष्मिकं हि तत् ॥ २७ ॥
शुकश्च सारणो वीरश्चैहिकौ मन्त्रिणौ तव ।
वानरीं तनुमास्थाय हतौ तत्र स्थितावपि ॥ २८ ॥
आवामामुष्मिकौ राजन् विरूपाक्षमहोदरौ ।
मैथिली दीयतां तूर्णं नो चेत्सहचरौ तव ॥ २९ ॥

रावणः—(सभयं सशिरःकम्पं स्वगतं वा स्वगतमेवोच्यते ।)

नीतिशास्त्रमिदं श्रुत्वा कुम्भकर्णः क्वचिद्बली ।
हन्ति चेन्मामतो युद्धे प्रथमं प्रेष्यतामयम् ॥ ३० ॥

विरूपाक्षमहोदरौ—( प्रभोः शिरःकम्पनादन्तर्गतमभिप्रायमवगम्य )

---

अथैहिकामुष्मिकमुच्यते—राज्येति ॥ ऐश्वर्यातिशयात् भ्रातृत्वाद्वा राज्यं ग्रहीतुं क्षमोऽपि सचिवः मनसापि किमुत वाचा कर्मणा वा ॥ २७ ॥

प्रासङ्गिकमुक्त्वा प्रस्तुतमाह—शुकश्चेति द्वाभ्याम् ॥ वीरः शुकः सारणोऽपि वीरः स्वाम्युत्सवादत इति वररुचिनीतौ स्वतनुं त्यक्त्वा वानरीं तनुमास्थाय तत्र रामकटके हतौ गतौ । "हन हिंसागत्योः" । अधुनापि स्थितौ शरीरव्यत्ययेन तत्पक्षाश्रयणाच्चैहिकौ ॥ २८ ॥

आवां तु न तथेत्याह—आवामिति ॥ भवता पीडितयोरप्यावयोर्वैरूप्यं नास्ति इत्याह । मैथिली दीयतां तूर्णमिति । ननु तददाने युवयोः का गतिरिति चेत्तत्राह । चेन्न दास्यसि तर्हि आवां तव सहचरौ या गतिस्तव सैवावयोरिति भावः ॥ २९ ॥

नीतीति ॥ क्वचित्कदाचित् प्रेष्यतां प्रस्थाप्यताम् ॥ ३० ॥



नीतिशास्त्रविदो धर्मं केवलं नृपतेः पुरः ।
पठन्ति युवराजादिपुरतो न कदाचन ॥ ३१ ॥

हा नाथ लङ्केश्वर किमित्यावयोः श्रद्धाधिकारिणोर्वैरूप्यशङ्कामङ्कुरयसि ? तेऽन्ये दुरधिकारिणः पापाः । उक्तं च ।

न सर्पस्य मुखे रक्तं न दुष्टस्य कलेवरे ।
न प्रजासु न भूपाले धनं दुरधिकारिणि ॥ ३२ ॥
तेऽप्यधिकारिणः पापा ये द्विषन्ति निजं पतिम् ।
आवां तथाविधौ नैव भवानपि न मूढधीः ॥ ३३ ॥

नियुक्तहस्तार्पितराज्यभारा-
स्तिष्ठन्ति ये स्वैरविहारसाराः ।
बिडालवृन्दाहितदुग्धमुद्राः
स्वपन्ति ते मूढधियः क्षितीन्द्राः ॥ ३४ ॥

---

अन्तर्गताभिप्रायमवगम्य सीतां न दास्यति प्रत्युत कुम्भकर्णाद्बिभेतीति ज्ञात्वा मन्त्रिणावूचतुरिति शेषः । नीतिशास्त्रेति ॥ नीतिशास्त्रनिर्णेतॄणां गुरौ सति राज्यकृत् युवराजः ॥ ३१ ॥

नेति ॥ कोपे दुष्टे दुरव्ययं दुरधिकारिणि कोपातिशये सति दुष्टस्य पुंसः शरीरे रक्तं न । सर्पस्यापि मुखे न तस्य क्रोधविपाभ्यामवशोषणात् । तथा दुरधिकारिणि दुष्टे नियोगिनि सति प्रजासु धनं न । राजन्यपि न अन्तराले गतत्वात् । अतः कुम्भकर्णाद्याश्रयणान्न राज्यं त्वयि नास्मासु अतः को लाभ इति भावः॥३२॥३३॥

नृपोऽप्यप्रमत्तः स्यादित्याह—नियुक्तेति ॥ ते राजानोऽलं मूढधियः राज्यकरणाभावात् । ये स्वैरं स्वच्छन्दं ये विहारास्त एव साराः करणीयत्वेनोपादेया येषाम् । एवंभूताः सन्तः स्वयं तिष्ठन्ति

अपि च ।

उत्खातान्प्रतिरोपयन् कुसुमितांश्चिन्वन् लघून्वर्धयन्
क्षुद्रान्कण्टकिनो बहिर्निरसयन्विश्लेषयन् संहतान् ।
अत्युच्चान्नमयन्नतांश्च शनकैरुन्नामयन् भूतले
मालाकार इव प्रयोगचतुरो राजा चिरं नन्दते ॥ ३५ ॥

राजन्कार्यवशाद्विरुद्धसंग्रहोऽपि राज्ञा शुद्धेनाशुद्धसंग्रहः प्रयोजनहीनोऽपि कर्त्तव्यः । प्रयोजनं जनयति क्वचित्काले । अत्र भगवान् भवतामिष्टः प्रमाणमेणाङ्कमौलिः ।

जीर्णेऽप्युत्कटकालकूटकवले पुष्टे हठान्मन्मथे
नीते भासुरभालनेत्रतनुतां कल्पान्तदावानलैः ।

---

राज्यवृत्ताज्ञानमेवात्र स्वापः । बिडालवृन्दे आहिता प्रापिता दुग्धमुद्रा क्षीरपात्रं यैस्ते । अत्र बिडालसाम्यं नियुक्तानां दुग्धस्य राज्यसाम्यमिति ॥ ३४ ॥

अथातिसंक्षिप्य राजवर्तनं दर्शयति—उत्खातानिति ॥ उत्खातान्स्थानत्याजितान् प्रतिरोपयन् स्थानान्तरं स्थापयन् कुसुमितान् सुपुष्पवतः भृत्यद्रुमान् लघून् लघुवृक्षतुल्यान् क्षुद्रान् अन्यवृक्षसमानान् कण्टकिनः पुनस्तापकारिकण्टकद्रुमान् संहत्य स्थितान् दुर्भृत्यान् अत्युच्चान् सकलैश्वर्योन्नतवृक्षान् नृपभावमारूढत्वात् नतान् आत्मानुकूलार्जवस्कन्धान् । भृत्यद्रुमयोः साम्यम् ॥ ३५ ॥

अथ विरुद्धसंग्रहः कार्यवशात् शुद्धेन राज्ञा अशुद्धसंग्रहः प्रयोजनहीनोऽपि कर्त्तव्य एवात्र तद्रुद्रमेवोदाहरति—जीर्णे इति ॥ प्लुषदाहे दग्धेऽपि शक्त्या चन्द्रादिसंग्रहं विनापि कालकूटादिकहननसामर्थ्यं शक्तिस्तद्युक्तोऽपि संग्रहं करोत्येव । विषाग्निकोपानां कार्यवशात् लोकरक्षणसंहारेन्द्रियजयकार्यवशः तदर्थं चन्द्रगङ्गो-

यः शक्त्या समलंकृतोऽपि शशिनं शैलात्मजां स्वर्धुनीं
धत्ते कौतुकराजनीतिनिपुणः पायात्स वः शङ्करः॥३६॥
दिग्वासा यदि तत् किमस्य धनुषा शस्त्रं च किं भस्मना
भस्माथास्य किमङ्गना यदि च सा कामं परं द्वेष्टि किम्।
इत्यन्योन्यविरोधिकर्मनिरतं पश्यन्निजं स्वामिनं
भृङ्गी सान्द्रशिरावनद्धशकलं धत्तेऽस्थिशेषं वपुः॥३७॥
ब्राह्मणं मन्त्रिणं द्रोणं शुद्धं वीरं भविष्यति।
गुरुं दुर्योधनस्त्यक्त्वा यथा त्वं मा तथा भव ॥ ३८॥

मन्दोदरी—(अत्रान्तरे रावणेन सह खेलमाना स्मर-

---

माधारणं शुद्धसंग्रहः शक्त्या समलंकृत इत्युक्तत्वान्निष्प्रयोजनः। तव तु नीतिवैपरीत्यं युक्तमेव। तव गुरोः शङ्करस्यापि नीतिवैपरीत्यमालोक्य मन्त्रिचक्रं चूडामणिर्यथा भृङ्गी तथा वयमपीति वक्तुं रुद्रमुदाहरति जीर्णेऽपीति। "दैशिकगुणाः सच्छिष्यमाश्रयन्ते" इति न्यायात्॥ ३६॥

दिग्वासेति॥ परमित्यङ्गनायोगेऽप्यजेयत्वात् कामोपरमत्वमुक्तम्। भृङ्गीनाम गणश्रेष्ठः। कीदृशं वपुः सान्द्रा या नाड्यस्ताभिरवनद्धानि सर्वतो बद्धानि शकलानि शिरःपादपाण्यादिखण्डानि यस्मिन् तत्। "भित्तं शकलखण्डे वा" इत्यमरः॥ ३७॥

अथात्मनो मन्त्रातिशयं द्योतयन् भविष्यमाह—ब्राह्मणमिति॥ द्रोणं त्यक्त्वा तद्वाक्यमतिक्रम्य यथा दुर्योधनो भविष्यति तथा त्वमद्यैव मा भवेत्यन्वयः। द्रोणमेव विशिनष्टि। प्रथमं ब्राह्मणं तत्रापि मन्त्रिणम्। ननु केचिन्मन्त्रिणोऽपि परपक्षमाश्रयन्त इति चेत्तत्राह। शुद्धं तत्रापि गुरुं हितोपदेष्टारं वीरं दुर्निवाराग्रहशूरसमूलाशेषकुलक्षयो दुर्योधनस्य भाव्यः तथा तवाद्यैवेति भावः। सुगमम्॥ ३८॥

स्मेरवाणीविलासलीलया अशोकवनिकामागम्य जानकी-स्थानमाक्रम्योपविश्याह ) प्राणनाथ लङ्केश्वर पश्य ।

मन्दोदरीजनकजाङ्गमनोहरत्वे
भेदोऽस्ति कोऽपि यदि नाथ विचारय त्वम् ।

रावणः—मैनः प्रिये परिमलस्तव भेदमाख्या-
त्यङ्गे विदेहदुहितुः सरसीरुहाणाम् ॥ ३९ ॥

रूपे न वास्याश्च न कोऽपि भेदः
खेदं प्रिये मद्वचनेन मा गाः ।
सीताधरे वामधुरे दशास्यो
रामो रमिष्यत्यथ वाथ सद्यः ॥ ४० ॥

मन्दोदरी—( सकरुणा लङ्कामधिक्षिपति । )

विभीषणः पापकथानिमग्नः
स्वापाकुलोऽभूद्यदि कुम्भकर्णः ।

---

मैन इति ॥ हे प्रिये तवाङ्गे मैनः मीनस्येवायं परिमलो मैनः भेदमाख्याति कथयति । विदेहदुहितुरङ्गे सरसीरुहाणां परिमलः भेदमाख्यातीति भेदः ॥ ३९ ॥

ननु रूपादौ इत्युक्ते किमपि विमुखां दृष्ट्वा पुनराह—रूपेणेति ॥ हे प्रिये तव अस्याः सीतायाश्च सुगमम् । वागर्थः प्रतिपाद्यते । रामः अद्यैव एवार्थे वाशब्दः । राम एव वा सीताधरे रमिष्यति दशास्यो रावणः सद्य एव वामधुरे वामाः मांसाशिनस्तेषां धुरं वहतीति वामधूः संग्रामस्तं प्रति रमिष्यति रमयिष्यतीत्याक्षिप्यते । कर्मणि चतुर्थी । "वामोऽस्त्री मुग्धयुद्धयोः" इति नाममाला । अन्यत् पूर्ववत् ॥ ४० ॥

प्रतिपक्षाश्रयणात् लङ्काभङ्गेप्सुत्वमेव पापकथा तत्र निमग्नः । य-

राजाभिमानी पतितः कलङ्के
लङ्के निमग्नासि गभीरपङ्के ॥ ४१ ॥

( इति निष्क्रान्ताः सर्वे )

इति श्रीहनुमन्नाटके मन्त्रिवाक्यं नाम नवमोऽङ्कः॥ ९ ॥

## अथ दशमोऽङ्कः ।

रावणः–( ततः सानुचरः सुन्दरं मन्दिरं प्रविश्य ) भो भो लङ्केश्वरानुजीविनो जनाः शृणुत । अहमिदानीं मायाप्रपञ्चरचनाभिर्जानकीं मृदुसुरभिसुवर्णस्फीतदोर्मूललालित्यविराजमानपीनोन्नतकुचकलशोपशोभितोरःस्थले खेलमानस्तन्मधुराधरं पास्यामि ।

मायाविनोऽनुचराः–यद्रोचते देवस्य ।

---

द्विति निश्चये । कलङ्के पापे सीताभिलाषरूपे ॥ ४१ ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकटीकायां वालिवधो नाम नवमोऽङ्कः ॥ ९ ॥

---

राक्षसान् रावयतीति रावणः रामः। " मृतिलक्षणयोरनु " इत्यव्ययवृत्तौ । लङ्केश्वरस्यानुमृतिं प्रतिजीवितुं शीलं येषां ते लङ्केश्वरमरणार्थं वा जीवनं येषां ते भो वानराः " माया वञ्चनयुद्धयोः " इति विश्वः। युद्धप्रपञ्चरचनाभिः। अथेति ॥ तयोः रामलक्ष्मणयोः रूपलावण्ये ताभ्यां पूर्णे अचैतन्याद्विपरीतनेत्रम् । सुगमम् । अथ वागर्थः प्रतिपाद्यते । रजनिचरे स्वप्ने " रक्षःस्वप्नौ निशाचरौ "

रावणः—

अथ रजनिचरेशो रामसौमित्रिमाया-
विरचितशिरसी तद्रूपलावण्यपूर्णे।
गलदविरलरक्ते प्रेतपर्यस्तनेत्रे
जनकदुहितुरग्रे स्थापयामास पापः॥ १॥

जानकी—( सबाष्पं शिरःसरसीरुहद्वयमालोकयन्ती )

अहह जनकपुत्री फुल्लराजीवनेत्री
नयनसलिलधारागर्भनिर्मुक्तहारा।
रमणमरणभीता मृत्युना किन्न नीता
हृदयदहनजालः संदहेद्वा विशालः॥ २॥

( रामशिरःकमलमधिकृत्याह। )

हा राम हा रमण हा जगदेकवीर तत्किं न स्मरसि ?

---

इति हैमी। अचितशिरसी अचितः " अजितात्माऽचितोऽवशः " इति विश्वः। ईशः जनकदुहितुरग्रे स्थापयामास। " एर्लोपः " इतीकारलोपः। कीदृश इत्यपेक्षायामाह। रामसौमित्रिरूपेण मायया आविः प्रत्यक्षः एकं शिरो रामः एकं लक्ष्मण इति लक्ष्मणो मेघनादं हनिष्यति रामो रावणमिति व्यञ्जकः। "आत्मा वै पुत्र उत्पन्नः" इति श्रुतेः। पं धर्मंमा समन्ततः पातीति पापः धर्मपः "पोऽस्त्रियां धर्मयमयोः" इत्येकाक्षरी॥ १॥

अहहेति॥ अहह इति खेदे। संदहेत् संदहतु। लोडर्थो लिङ्। सुगमम्। वागर्थः। स्वप्ने सीता वदति हे राम रमण जनकपुत्र्यहं मृत्युना रावणकालेन भवता आत्मसमीपं किन्न नीता। कीदृशी मरणभियं प्रापिता अतो हृदयस्थत्वद्वियोगाग्निः किं न संदहेत् अपि तु संदहेदेव। चार्थे वा। चकारात्पुनः किं नेति ग्रहणम्॥ २॥

प्रकरणार्थः स्पष्टः। वागर्थः। हेति कष्टम्। अनुभूतं भवता। अ-

अधरमधु मदीयं कामकेलीषु पीत्वा-

ऽमृतमिति यदवादीस्तीरवानीरकुञ्जे ।

किममृतपरिपूर्णं शीर्णमप्यम्बरेऽर्क-

स्तम इव न हि शत्रुं नाथ मथ्नासि घोरम् ॥३॥

( रावणः शिरोविरहशोकमोहरोषप्रेमाकुलामालापैराश्वासयति । )

जानकी–( सत्वरं प्राणांस्त्यक्तुमिच्छन्ती ) भोः प्रा-

णाधिनाथ राम ।

अइह मधुरवाणी किन्न वक्त्रारविन्दे

नयनकमलयोस्ते नो मदङ्के विलासः ।

अमरपुरवधूनां वल्लभोऽद्यासि नूनं

व्रजतु परमहंसो मे त्वदालिङ्गनेन ॥ ४ ॥

( इति रामशिरःकमलमालिङ्गितुमिच्छति । )

( आकाशे )

---

अधरेति ॥ तीरे नदीतीरे वानीरकुञ्जस्तत्र अमृतपरिपूर्णं चन्द्रमण्डलं शीर्णं गतरसं किं त्वधरामृतं तु नवीनत्वात्सरसमिति भावः । "जरठारसयोः शीर्णम्" इति हैमी । अर्कः सूर्यस्तम इवान्धकारमिव । "क्षीणेन्धतमसं तमः" इत्यमरः । वागर्थेऽप्ययमेवार्थः ॥ ३ ॥

कोपातिशयान्मृतमारणोक्तिः । मोहोऽत्र शोकादिः गतिस्तदाकुलाम् । वागर्थः । शिरसि शोकमोहौ विरहे अद्यापि रामो मां नालिङ्गतीति रोषप्रेमाणौ रावणपक्षे राम इति शेषः । वागर्थे । रामोपरि भ्रमयित्वेति त्वदालिङ्गनेन हेतुना प्रकरणं सुगमम् । वागर्थे अत्युत्कटतामाविष्करोति । रावणे हते यावन्निरुद्धदेवाङ्गनावल्लभः यावदिति मे मम त्वदालिङ्गनाभावेन जीवो व्रजतु ॥ ४ ॥

न खलु न खलु सीते रामभूपालमौलिः
समरशिरसि वध्यो न प्रियस्ते कदाचित् ।
स्पृश कथमपि मातर्मा निशाचारिणस्त्वं
हर हर हरभक्तस्यैष मायावतारः ॥ ५ ॥

( इत्याकाशवाणीश्रवणमात्रेण शिरसी गगनमुत्पत्य निष्क्रान्ते रावणेन सह । )

जानकी—( महर्षं सत्रपं च ) अयि परमधर्मिणि कृपातरङ्गिणि सरमे किमित्यद्भुतमिति ।

सरमा राक्षसी—( सदयम् )

जानकि त्वं न जानीषे रावणस्यातिदारुणाम् ।
मायामासाद्य मा भैषी रामः कामं स जीवति ॥ ६ ॥

कोलाहलं काहलमर्दलानां
हेषारवं सञ्जतुरङ्गमाणाम् ।
आकर्णयाकर्णविशालनेत्रे
रामागमादार्तनिशाचराणाम् ॥ ७ ॥

विरम विरम शोकात्कुप्यमानोऽथ रामः
सतनयपशुबन्धुं रावणं मर्दयित्वा ।

---

वागर्थे । शिरः कं रावणाशिराग्राहिणं कमात्मान राममलमातश- येन रामभ्रान्त्या एनं रामरूपं रावणं मा स्पृशेति ॥ ५ ॥

मायावञ्चिनोऽपायमासाद्य अवगम्य मा भैषीर्भयं मा कार्षीः॥६॥

कोलाहलमिति ॥ आशु रामः कौशल्यव्यञ्जकं ज्ञापयति । आ- कर्णयेति । काहलो वाद्यभेदः मर्दलो मुरजः । सुगमम् ॥ ७ ॥

विरमेति ॥ बलभिदुपलः इन्द्रनीलमणिस्तद्वन्नीलः इन्द्रनीलम-

बलभिदुपलनीलः कोमलः कोमलाङ्गि
त्वदधरमधुपानं हुं करिष्यत्यजस्रम् ॥ ८ ॥

जानकी—

कामं जीवति मे नाथ इति सा विरहं जहौ ।
प्राङ्मत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता ॥ ९ ॥

रावणः—( ततः पुनरप्यशोकवनिकां प्रविशति मारनाराचभिन्नो सुरसुन्दरीभिः परिवृतः सीताहृदये विकारमुत्पादयितुम् ) भो जानकि पश्य ।

अस्मच्चण्डचपेटघातपतितः स्वर्दन्तिकुम्भस्थल-
स्थूलोन्मुक्तसरक्तमौक्तिकलतास्तोमार्चिताङ्घ्रिस्तनाः ।
एतास्त्वत्पदपद्मषट्पदवधूप्रायाः पुरन्ध्र्यो ध्रुवं
सीते संप्रति सङ्गतं तव सतीचारित्र्यवल्लीफलम् ॥ १० ॥

---

णिवदुज्ज्वलः हुं कुतस्ते भयमिति । यद्वा हुं रावणं निर्भर्त्स्य "हुं भये भर्त्सनेऽपि च " इति शाश्वतः ॥ ८ ॥

काममिति ॥ प्राक् पूर्वं अस्य रामस्य अन्तं मरणं सत्यं मत्वा जीवितास्मि । पुनः मे नाथो जीवतीति मत्वा शुचं विजहौ त्यक्तवत्यस्मीति । लज्जिता सापत्रपाभूदिति ॥ ९ ॥

अथान्यमायामनुवर्णयति—अस्मदिति ॥ हे सीते तव सतीचारित्र्यं पातिव्रत्यंधर्मस्तस्य वल्ली प्रसार एव वल्ली तस्याः फलं साम्प्रतं सङ्गतम् अद्यैव प्राप्तम् । धर्मः परत्र फलदस्तव त्वत्रैवेति भावः । तदेव फलं द्योतयति । यतः एताः पुरन्ध्र्यः मदीयनार्यः त्वत्पदपद्मयोः षट्पदवधूप्रायाः भ्रमरीतुल्याः । यथा भ्रमर्योऽरविन्दमाश्रयन्ते तथैवैतास्तव पादमिति भावः । तासां वैशिष्ट्यं द्योतयति । किंभूताः अस्मदीयो यश्चण्डचपेटघातः करतलप्रहारस्ततः पतिताः

सीते पश्य शिरांसि यानि शिरसा धत्ते महेशः पुरा
तानि त्वत्पदसंश्रितानि सुभगे कस्मादवज्ञायसे ।
श्रुत्वैवं परदारलम्पटवचः स्मित्वा हतं रावणं
निर्माल्यानि शिरांसि तानि तव धिक् साध्वीवचः पातु वः

भवित्री रम्भोरु त्रिदशवदनग्लानिरधुना
स ते रामः स्थाता न युधि पुरतो लक्ष्मणसखः।
इयं यास्यत्युच्चैर्विपदमधुना वानरचमू-
र्लघिष्ठेदं षष्ठाक्षरपरविलोपात्पठ पुनः ॥ १२ ॥

रावणः—( सवैदग्ध्यम् )

रे रे लङ्केश लौल्यात्रिपुरविजयिनो मा प्रतीषीः प्रसादं

---

विदलिताः ये स्वर्दन्तिनस्तेषां कुम्भस्थलेभ्यः सकाशात् स्थूलं बहुतरं यथा स्यात्तथा उन्मुक्ताः निर्गताः याः सरक्तमौक्तिकास्तासां लतास्तोमैर्वल्लरीसमूहैरार्चिता अङ्घ्रयः स्तनाश्च यासां ताः ॥ १० ॥

सीते इति ॥ पुरा शिरःकर्त्तनसमये अवज्ञायसे अवज्ञां करोषि । स्मित्वेत्यत्र कोपातिशयाद्धास्यम् । " शिवोत्तीर्णं तु निर्माल्यं तन्न स्पर्शार्हमुच्यते । " इति वचनात् । पात्विति। तस्याः वचसान्येऽपि जितकामाः भवन्तीति भावः ॥ ११ ॥

भवित्रीति ॥ हे रम्भोरु अचिराच्छीघ्रमेव त्रिदशानां वदनग्लानि-र्मुखसंकोचः भवित्री भाविनी अस्तीति शेषः । कुत इत्यत्त आह । यतो युधि स प्रसिद्धस्ते त्वदीयो रामः मम पुरतो न स्थास्यति उच्चैर्विपदम् । जानकी हे लघिष्ठ हे लघुतर इदं पद्यं षष्ठाक्षरपरं स-समाक्षरं तद्विलोपात्। विलुप्येति ल्यब्लोपे पञ्चमी । पुनः पठ एवमुक्ते सप्तमाक्षरलोपादयमर्थः । चरणत्रिके तु क्रमेण त्रिनाविलोपः दशवद-नग्लानिः रामः स्थाता उच्चैःपदं यशोरूपम् ॥ १२ ॥

रे रे इति ॥ हे सीते सः अयं त्वत्पदनतः दशास्यः कस्मादव-

मा मां छित्वाल्पबुद्धे न खलु भवसि वै प्राकृतः प्राणरङ्कः।
मारारे मा वितारीर्वरमनलभुवा शापितोऽसीति यस्य
क्रुद्धं मूर्द्धानमीशोऽप्यनुनयति भृशं सोयमुच्चैर्दशास्यः॥

अर्द्धं चेतसि जानकी विरमयत्यर्द्धं च लङ्केश्वरः
किं चार्द्धं विरहानलः कवलयत्यर्द्धं च रोपानलः।
इत्थं दुर्विधवैशसव्यतिकरे दाहे समेऽप्येतयो-
रेकं वेद्मि तुषारदग्धमपरं दग्धं करीषाग्निना॥ १४॥

---

ज्ञायसे इति भावः। स कः यस्येति। क्रुद्धं मूर्द्धानम् ईशोऽपि जग-तामीश्वरोऽपि रुद्रः उच्चैरनुनयति इति किम्। रे रे इत्यनादरे। ल-ङ्केश त्रिपुरजयिनः सकाशात् मां छित्वा प्रमादं मा प्रतीपीः मा स्पृह मा गृहीष्वेत्यर्थः। हे अल्पबुद्धे मारारेः खलु त्वं प्राणरङ्को न भवसि वर्गगृध्रवः प्राणरङ्काः त्वं तादृक् न। अत्रवार्थे वै। प्राकृत इवा-धुनिक इव यथेदानींतनः प्राणरङ्कस्तथा त्वं नेति भावः। मामेव-माक्रुश्य रुद्रमाक्रोशति। हे मारारे कामशत्रो वरं मा वितारीः एतस्य वरं मा देहि। तथापि दित्सन्तमालक्ष्याह। अनलभुवा त्वदात्म-जेन गुहेन शापितोऽसि चेदस्मै वरं दास्यसि तर्हि गुहस्य शपथोऽ-स्तीत्यर्थः। वरार्थी भजन्नभक्तो भजनानुसारं दास्यन्न प्रभुरिति श्लोकाभिप्रायः॥ १३॥

रामस्य दग्धहृदयत्वमुपपादयन्नात्मनो भजनीयत्वमाह। चि-त्तस्य द्वौ भागौ तद्विभागं दर्शयति। रामस्येति शेषः। रामस्य चे-तसि विषये अर्द्धं चेतः यद्वा चेतसोऽर्द्धं चेतसि तस्मिन्। कर्मणि सप्तमी। अर्द्धं चेतः जानकी विरमयति। तत्स्मरणाविर्भावात्। च पुनः अर्द्धं चेतः लङ्केश्वरो विरमयति तदुत्पन्नकोपातिशयात्। किं च तर्के किं सीताक्रान्तरामहृदयार्द्धं रामविरहानलः कवलयति भस्मीकरोति। च पुनः अर्द्धं चेतसोऽर्द्धं मद्रावणक्रान्तं तद्रोषानलः कवलयति। दुर्विधो दुःप्रकारो वैशसो हिंसा तस्य व्यतिकरः शीतो-

चन्द्रसुन्दरमुखि प्राणप्रयाणो
प्राणान् रक्ष मृगाक्षि मन्मथनदि प्राणेश्वरि त्राहि माम् ।
रामश्चुम्बति ते मुखं च सुमुखेनैकेन चाहं पुन-
श्चुम्बिष्यामि तवाननं बहुविधैर्मुञ्चाग्रहं मानिनि ॥१५॥

जानकी—

विरम विरम रक्षः किं वृथा जल्पितेन
स्पृशति न हि मदीयं कण्ठसीमानमन्यः ।
रघुपतिभुजदण्डादुत्पलश्यामकान्ते-
र्दशमुख भवदीयो निष्कृपो वा कृपाणः ॥१६॥

---

ष्णव्यत्ययो यत्र एवंभूते एतयोः कामकोपानलयोर्दाहे समेऽपि सति यद्वा एतयोश्चेतसोर्द्वयोर्मध्ये एकधर्मं तुषारदग्धं वेद्मि कामाग्नेः शीतदाहतोक्ता । अपरमर्द्धं करीषाग्निदग्धं वेद्मि । शुष्कगोमयचूर्णं करीषः । एतेन कोपाग्नेरुष्णत्वम् । अतो रामो दग्धहृदयो जातः त्वं मां भजेत्याशयः ॥ १४ ॥

मुग्धे इति ॥ पुनरप्यनुनयति दैन्याविष्करणाय पुनः पुनः संबुद्धिः हे मन्मथनदि कामतरङ्गिणि । प्रकरणं सुगमम् । वागर्थः प्रतिपाद्यते । अत्र रामस्य विप्रलम्भे प्रलापावस्था । सोक्ता रसोदधौ । "कान्ताश्रितकाल्पनिकव्यवहारः स्यात्प्रलापोऽयम् । " इति । अत्र मुग्धेत्यादि पूर्वं कल्पना रामे वदति हे मुग्धेत्यादि सम्बोधनवती मैथिली रामोऽहम् एकेन निरुपमेन मुखेन ते मुखं बहुविधैश्चुम्बनभेदैश्चुम्बिष्यामि । हे मानिनि आग्रहं मुञ्च त्यज पुनरपि तवाननं त्वदीयमाननं मामिति शेषः । मा चुम्बिष्यतीति आग्रहं मुञ्चेत्यर्थः । "वर्तमानसामीप्ये वर्तमानवद्वा " । परस्परचुम्बनाद्रससङ्गः सूचितः ॥ १५ ॥

विरमेति ॥ हे रक्षः दशमुख भवदीयः निष्कृपो निर्दयः कृपाणः खड्गः वा स्पृशति वा हठात्स्पृशति । सुगमम् ॥ १६ ॥

पश्य ।

मद्ध्यानेनाभवद्रामः सीता रक्षस्तु तस्य वै ।
पश्य त्वत्कुलनाशाय मया रामेण भूयते ॥ १७ ॥

( इति रावणो निष्क्रान्तः )

( निजमन्दिरं कियन्तं कियन्तं समयं नीत्वा स्वगत इदानीं महान्तं प्रपञ्चमुत्पाद्य नूनं जानकीमनुभविष्यामीत्यवधार्य )

भेरीनिःसाणशङ्खध्वनिगणतुरगस्यन्दनस्फीतनादैः
सानन्दं राक्षसेन्द्रः कटकभटभुजास्फालकोलाहलेन ।
लङ्कामापूर्य रामः स्वयमभवदथो मायया रावणस्य
छिन्नान्मूर्ध्नो दधानः शिरसिरुहभरेष्वेकतः पञ्च पञ्च १८

( एवंविधो भूत्वा पुनरशोकवनिकां प्रविश्य )

रावणः—

लङ्काभटोऽथ रघुनन्दनवेषधारी
पापो जगाम पुरतो जनकात्मजायाः ।

---

मद्ध्यानेनेति ॥ क्रोधातिशयात् कोपमाविष्करोति । हे रक्षः मया ज्ञातं मद्ध्यानेन रामः सीताऽभूत् । त्वद्धतेन विशेषितत्वात् तस्य रामस्य ध्यानेनाद्य मया रामेण भूयते रामो भवामीत्यर्थः॥१७॥

भेरीति ॥ राक्षसेन्द्रः स्वयं रामोऽभवत् रामरूपोऽभवादिति मायया च्छिन्नान् कृत्तान् रावणस्य मूर्ध्नः शिरसिरुहभरेषु केशेषु एकतः पञ्च पञ्च कराभ्यां दधानः काकाक्षिन्यायेन एकत इत्युभयत्र गृह्यते ॥ १८ ॥

तत्रागतः सकामश्चेदत आह—लङ्केति ॥ यस्य रामस्य नाम्नः स-

नाम्नापि यस्य कुत इच्छति तस्य रूपा-
दन्याङ्गनापहरणेन मनः कदाचित् ॥ १९ ॥

जानकी—( रघुनन्दनवेषधारिणं तमालोक्य सहर्षम् )

साक्षादालोक्य रामं झटिति कुचतटीभारनम्रापि हर्षा-
दुत्थायोदस्तदोर्भ्यां दरदलितकुचाभोगचैलोन्नताङ्गी ।
धन्याहं प्राणनाथ त्यज रजनिचरच्छिन्नशीर्षाणि गाढं
मामालिङ्ग्याद्य खेदं जहि विरहमहापावकः शान्तिमेतु २०

( इत्यालिङ्गितुमिच्छति । )

रामवेषधारी रावणः—(सविषादम् )

भूत्वा ततोऽप्यवसरे जनकात्मजायां
लङ्कापतिर्मकरकेतुशरातुरायाम् ।
क्लीबो विशीर्णमणिदण्डयुतः स्मरार्त्तः
पापात्ततः शिव शिवान्तरधीयत द्राक् ॥ २१ ॥

---

काशात् तद्ग्रहणादेव मनः नामग्रहीतुरन्याङ्गनापहरणं नेच्छति किमु कर्त्तुं तस्य रामस्य रूपात्पराङ्गनाहरणं कुत इच्छतीति ॥१९॥

साक्षादिति ॥ साक्षान्निःसंशयं राममालोक्य झटिति शीघ्रं हर्षादुत्थाय कुचतटीभरेण नम्रापि एतेन झटित्युत्थानायोगो दर्शितः। उदस्तदोर्भ्यां रामालिङ्गनायोद्गतभुजाभ्यां दरमीषद्दलितं स्फोटितं यत्कुचाभोगचैलं कुचमण्डलवस्त्रं तद्युक्तम् उन्नतमङ्गकुचरूपं यस्याः। सुगमम् ॥ २० ॥

भूत्वेति ॥ ततोऽनन्तरम् अवसरे आलिङ्गनसमये स्मरार्त्तः रामरूपधारणात्पुरा कामार्त्तोऽपि रावणः क्लीबो भूत्वा ततः यायात् सीतावञ्चनाश्रितमायातः अन्तरधीयत अदृश्योऽभूत् । द्राक् शीघ्रं

जानकी—(परमोपदेशाद्रावणं रघुनन्दनवेषधारिणं मत्वा सविषादम् )

हाकाश हा धरणि हा वरुणार्क वायो
वेत्स्यामि धर्म कथमागतमात्मनाथम् ।

( आकाशे )

मन्दोदरी रघुशराहतराक्षसेन्द्रं
चुम्बिष्यति त्वमपि वेत्स्यसि तत्र रामम् ॥२२॥

अथ निजकेलिमन्दिरस्थो रावणः—( स्वगतम् )

कृतकृत्येऽपि रामत्वे वर्त्तमाने मयि स्थिते ।
निरुध्यन्त्येव ताः सर्वाः पापमूलाः प्रवृत्तयः ॥२३॥

जनस्थाने भ्रान्तं विषयमृगतृष्णाहृतधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।

---

जनकात्मजायां रामदर्शनात् कामशरातुरायां सत्यां शिव शिव कष्टं कष्टम् ॥ २१ ॥

हेति ॥ यत्र काले मन्दोदरी राक्षसेन्द्रं चुम्बिष्यति तत्र तस्मिन्नवसरे त्वमपि वेत्स्यसि । उक्तं च । "पञ्चतत्त्वानि धर्मश्च रविचन्द्रौ च पाशभृत् । रात्रिर्दिवा नरस्यैते वृत्तज्ञाः समुदीरिताः ॥" इति मनुः । अतः आकाशादीनां रावणवृत्तज्ञानसामर्थ्यात् ॥ २२ ॥

अथेति ॥ रामत्वे रामभावे विषये वर्त्तमाने मयि स्थिते सति । कीदृशे मयि कृतकृत्ये कृतं कृत्यं येन । यद्रामकृत्यं रावणशिरःकर्त्तनादिकं तदपि कृतमिति भावः । तदपि एताः प्रवृत्तयः क्लीबत्वादयः निरुद्धयन्ति । कीदृशः पापं मूलं यासां ताः पूर्वपापात्प्राप्सितसुखमिति कामिमतम् ॥ २३ ॥

जनस्थाने इति ॥ विषयः सीताभिलाषः स एव मृगतृष्णा

कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ २४ ॥

इति श्रीहनुमन्नाटके रावणप्रपञ्चो नाम
दशमोऽङ्कः ॥ १० ॥

तया आ समन्ततो हता धीर्यस्य तेन मया रावणेन जनस्थाने द-ण्डकारण्ये देशे भ्रान्तम् अत्राप्युदश्रु यथा स्यात्तथा प्रतिपदं हे वैदेहीति वचः प्रलपितम् अथ च लङ्काभर्तुर्मे मम वदनानां या परिपाटी तस्या वियोजनं कर्त्तनमिति यावत् । कृता वदनपरिपा-टीषुघटना इति पाठे रावणमुखपङ्क्तिषु इषुघटना बाणयोगप्रहारः कृतेति । मयापि रामत्वं मायारामरूपत्वम् आप्तं प्राप्तं तथापि कुशलवसुता सीता नाधिगता न प्राप्ता । " दर्भसीरनृपाः कुशाः " इति हैमी । कुशेन सीरेण लव्यते लक्ष्यत इति कुशलवः सीरध्वजो जनक इत्यर्थः । इदमेव पद्यं हतरावणस्य प्राप्तराज्यस्य परित्यक्त-सीतस्य रामस्य वाक्येन व्याकुर्वन्ति । तद्यथा विषया एव मृग-तृष्णा चतुर्दशसमान् वने स्थित्वा राज्यं प्राप्स्यामीति मृगतृष्णा विषयः सीताभिलाषस्तदन्वेषणरूपः रमयति सर्वानिति रामो राज्यं तद्भावो राज्यत्वमपि प्राप्तम् अन्यत्पूर्ववत् । अथास्य तृतीयोऽप्यर्थोऽस्ति कस्यचिद्भिक्षुकवाक्येन । विषयाः स्रक्चन्दनस्त्रीपुत्रलालनरूपास्त एव मृगतृष्णावदविद्यमानास्तैराहता धीर्यस्य तेन मया भिक्षुणा जनस्थाने जनानां लोकानां स्थाने स्थाने गृहे गृहे भ्रान्तम् । एक-वचनमुपलक्षणं जात्येकवचनं वा । वै निश्चयेन प्रतिपदं देहि इति उदश्रु यथा स्यात्तथा प्रलपितम् । " पदं स्थाने रसस्थितौ " इति चरकः । यस्य रसस्य यः आश्रयस्तदग्रे तद्रसाभिनयेन उद-श्रुत्वमुक्तम् । अलमत्यर्थं काभर्तुः कुत्सितप्रभोः संबन्धे वदनस्य परिपाटी रसाभिनयवाक्चातुर्यादिरूपा तस्या विशेषे घटना चेष्टा कृता एवं रामत्वं नत्तद्रञ्जनत्वमाप्तं कुशलवसुता उत्तमवसुत्वं

# अथ एकादशोऽङ्कः।

जानकीवल्लभः—( अथ तत्र सुवेलाद्रिकटके लङ्कापतेः सकाशादधिगतं दूतमङ्गदं पप्रच्छ ) अये दूताङ्गद लङ्केश्वरे सन्धिर्न जनिता प्रीतिकारिणी स्यादनुपकारिणी वा।

अङ्गदः—राजन् सर्वथेयमनुपकारिणी पुलस्त्यापत्येषु प्रीतिरिति भगवानिहोदाहरणं हरिणाङ्कशेखरस्तद्गुरुत्वात्।

उक्षा रथो भूषणमस्थिमाला
भस्माङ्गरागो गजचर्म वासः।
एकालयस्थेऽपि धनाधिनाथे
सख्यौ दशेयं त्रिपुरान्तकस्य॥ १ ॥

रामः—( विहस्य ) भो महावीराङ्गद युवराज वानरभटान् ब्रूहि। भो भो सुग्रीवसैनिकाः रात्रौ सावधानतया स्थातव्यं श्वः सूर्योदये रामस्य समरोत्सवो भविष्यति।

---

रत्नहेमादिसमूहरूपा नाधिगता न प्राप्तेति॥ २४॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकायां रावणप्रपञ्चो नाम दशमोऽङ्कः॥ १०॥

---

उक्षेति॥ उक्षा वृषः धनाधिनाथे कुबेरे त्रिपुरान्तकस्य रुद्रस्य दशा विपरीता तथा रुद्रानुचरस्यापि रावणस्य विपरीतैव मतिरिति भावः॥ १॥

अङ्गदस्तथा करोति

रामकटके शयानौ रामलक्ष्मणौ निहन्तुं रावणेन प्रहिता प्रभञ्जनी नाम राक्षसी—

उत्खातदारुणसुतीक्ष्णकृपाणिकासौ
वीराटवीषु निशि निर्भरतः शयानम् ।
दृष्ट्वा सुदर्शनगुरुभ्रमणेन गुप्तं
रामं निहन्मि कथमद्य वरं वराकी ॥ २ ॥

( तत्रावसरे प्रबुद्धमङ्गदं वीरमवगम्याधीरं पुनर्गन्तुमुद्यता प्रभञ्जनी । )

अङ्गदः—( साटोपम् )

मा गास्तिष्ठ निशाचरि क्षणमपि स्थित्वा पुनर्गम्यतां
यत्रास्ते भुजविक्रमाखिलजगद्विद्रावणो रावणः ।
अद्याप्यङ्गदबाहुपाशपतिता मूढे किमाक्रन्दसे
सिंहस्यान्तिकमागतेव हरिणी कस्त्वां परित्रायते ॥ ३ ॥

---

उत्खातेति ॥ अस्यायमर्थः । सा प्रभञ्जनी राममिति दध्यौ । इति किं वराक्यहम् अद्यास्मिन्नवसरे कथं निहन्मि । कीदृशी उत्खाता कोशान्निःसारिता दारुणा सुतीक्ष्णा च कृपाणिका छुरिका यस्याः सा । हननाक्षमत्वमेव द्योतयति । निर्भरतः निबिडासु वीराटवीषु वीरपङ्क्तिषु शयानम् । "वनपङ्क्त्योरथाटवी" इति हैमी । तत्रापि सुदर्शनाख्यचक्रस्य गुरु यथा स्यात्तथा भ्रमणेन रामस्य विश्वतः परिक्रमेण गुप्तं रक्षितम् ॥ २ ॥

हे निशाचरि मा गाः क्षणं स्थित्वा यत्र रावणस्तत्र पुनर्गम्यताम् । किमाक्रन्दसे किमर्थमाक्रन्दं करोषि । सुगमम् ॥ ३ ॥

( कटके वानरभटास्तद्घोरचीत्कारमाकर्ण्य भैरवरवैर्दोः-स्तम्भास्फालकेलिमभिनीय साटोपमुत्पाटितमूलोग्रशैल-धारिणः प्रचण्डकोलाहलेन लङ्कामाकुलयन्तोऽकूपार-स्येव यामिन्याः परं गताः । लङ्कायां रावणः सूर्योदय-मासाद्य वानरवाहिनीकोलाहलामर्षमूर्च्छितः समरभूमौ कटकमुत्कटं प्रस्थाप्य लङ्काचलशिखरपर्यङ्कमारुह्य पुर-स्थितेन महोदरेण मन्त्रिणा सह रामवाहिनीमहिमानं पश्यति स्म । )

वानराः-( तत्र रामकटके )

खेलन्तोऽखिलवानरा जलनिधौ दृष्ट्वा रणे राक्षसान्
उत्पाट्याशु विमानमेव जगृहुः पृथ्वीं समां चक्रिरे ।
दृष्ट्वा तं च विभीषणं रघुपते त्राहीति वाक्यं तदा
श्रुत्वाऽसौ हनुमानुपेत्य तरसा प्रीत्या ददर्श स्वयम् ॥४॥

रावणः-( लङ्कायां महोदरं पृच्छति । ) भो महोदर कदाऽऽगतो रामोऽस्माभिर्न विदितं रामागमन-दिनम् ।

---

खेलन्त इति ॥ आशु शीघ्रमुत्पाटय उन्मूल्य विमानं विविधवृ-क्षसमूहम्। "मानाश्चित्तोन्नतौ वृक्षे" इति हैमी । मानानां समूहो मानं विविधं मानम् ।यद्वा । उत्पाट्य धुराद्यङ्गानि विभज्य विमानं राक्षसानां रथादीनि विभीषणं दृष्ट्वा च पुनः रघुपते त्राहीति विभीषणबलस्य वाक्यं श्रुत्वा हनुमानुपेत्य स्वयमात्मानं प्रीत्या ददर्श दर्शयामास । विभीषणस्थानमगमादित्यर्थः । अन्यत् सुगमम् ॥ ४ ॥

महोदरः—( सीतां प्रयच्छतु रामायेति बुद्धया साहसमवलम्ब्य

राजन् लङ्केश्वर ।

न्यञ्चद्भूवलयं चलत्क्षितिधरं क्षुभ्यत्समस्तार्णवं
त्रस्यद्वैरिवधूविलोचनजलप्रारब्धवर्षोद्गमम् ।
प्रोदञ्चत्कपिवाहिनीपदभरव्याधूतधूलीपट-
च्छन्नादित्यपथं कथन्न विदितं तज्जैत्रयात्रादिनम् ॥५॥

जयप्रयाणे रघुनन्दनस्य
धूलीकदम्बास्तमिते दिनेशे ।
शशिप्रभं छत्रमुदीक्ष्य बाला
सूर्योदये रोदिति चक्रवाकी ॥ ६ ॥

सहायाः मिन्द्रप्रदत्तं छत्रगजतुरङ्गावलीसंभवोरामदेवस्य

रावणः—महोदर रामः कुत्रास्ते ।

महोदरः—देव पश्य ।

---

न्यश्चादिति ॥ हे रावण जीयतेऽस्मिन्निति जैत्रं तस्य रामस्य जैत्रं चेदं यात्रादिनं कथं न विदितं केन प्रकारेण न ज्ञातम् । किंभूतं जैत्रं यात्रादिनं न्यञ्चन्नम्रीभवद्भूवलयं यस्मिंस्तादिति। सर्वत्र चलन्तः क्षितिधराः यस्मिन् क्षुभ्यन्तः समस्ताः अर्णवा यस्मिन् तत्। यद्वा। सर्वे अर्णवाः त्रस्यन्तो ये वैरिणः रक्षांसि तेषां वध्वस्तासां विलोचनजलैः प्रारब्धो वर्षाया उद्गमो यत्र प्रकर्षेणोऽञ्चन्तो ये कपयस्तेषां वाहिनीभ्यः पदभरेण चरणप्रक्षेपातिशयेन व्याधूतो व्युत्थापितो यो धूलिपटरेणुविस्तारस्तेन छन्नः आच्छादितः आदित्यपथो यस्मिन् । " विस्तारे पटञ् " ॥ ५ ॥

जयेति ॥ जयार्थं प्रयाणं जयप्रयाणम् ॥ ६ ॥

अङ्के कृत्वोत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हन्तु-
र्भूमौ विस्तारितायां त्वचि कनकमृगस्याङ्गशेषं निधाय।
बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनार्पितं तीक्ष्णमक्ष्णोः
कोणेनोद्वीक्ष्यमाणस्त्वदनुजवचने दत्तकर्णोऽयमास्ते ७॥

अपि च ।

भ्रूभङ्गाद्बद्धसिन्धू रघुपतिरवताद्बन्दिना वंदितोऽसौ
विष्टस्ते मातुलस्य त्वचि पुनरनुजं मन्त्रिणं दत्तकर्णः।
बाणे दत्तार्द्धदृष्टिस्तव जयपिशुने लक्ष्मणे सस्मितो यः
सुग्रीवग्रीवबाहुः कृतचरणभरः सोऽङ्गदे रावणोऽयम् ८॥
गगनं गिलितं भूमिर्गिलिता गिलिता दिशः ।
सरितः प्लवगैः पीताः सीतापतिपदानुगैः ॥ ९ ॥
देव महोत्पातं पश्य मध्यंदिनेऽपि ।
क्वचिन्मीनः क्वचिन्मेषः क्वचिल्लम्बितकृत्तिका ।
क्वचिन्मृगशिरः सार्द्रं नभो व्याधगृहायते ॥ १० ॥

अङ्क इति ॥ प्लवगबलपतेः सुग्रीवस्य अक्षस्य त्वत्सुतस्य हन्तुः हनुमतः अङ्के इत्युभयत्र धनुर्जयस्यातिशयज्ञानार्थं रक्षःकुलघ्नमिति। अत्र ज्याविशिष्टत्वं प्रगुणितत्वं त्वदनुजवचने । एतेन लङ्काभङ्गक्रमकथाकथनं सूचितम् ॥ ७ ॥ ८ ॥

गगनमिति ॥ हे रावण सीतापतिपदानुगैः प्लवगैर्गगनं लोपितम् । भूमिर्गिलिता अदृश्या कृता दिशो गिलिताः निरालोकीकृताः । एतेन तद्बहुत्वमुक्तम् ॥ ९ ॥

क्वचिदिति ॥ पूर्वाचरमचरणोत्तरारेवत्युपलक्षितो मीनः । अश्विनीभरण्युपलक्षितो मेषः । कृत्तिका सैव सार्द्रम् आर्द्रासहितं मृग-

रावणः—( साभ्यसूयम् ) अहो महोदरामात्य किमर्थं वल्गसे । पश्य ।

प्रतापं संसोढुं रविरपि मुहुर्यस्य न विभु-
र्निमज्जत्युन्मज्जत्यपरजलधौ पूर्वजलधौ ।
हरिः शेते वार्धौ निवसति हिमाद्रौ पुरहरो
विरिञ्चिः किंचापि स्वजनिकमलं मुञ्चति न वा ॥ ११ ॥

( अत्रान्तरे यथा रावणो न वेत्ति तथाशोकवनिकास्थितविमाने जानकीमारोप्य रामं दर्शयति स्म सरमा । )

विदेहदुहितुर्दृष्टिर्दशग्रीवारिपौ बभौ ।
सुनीलेव मनोरम्ये तमाले मधुपाङ्गना ॥ १२ ॥

तत्र रामकटके वानराणाम् ।

हेमप्राकारजघनां रत्नद्युतिदुकूलिनीम् ।
लङ्कामेके त्रिकूटस्य ददृशुर्वनितामिव ॥ १३ ॥

---

शिरः । व्याधगृहेऽपि मीनो मत्स्यः कृत्तिका कृपाणिका " कृत्तिका स्त्री कृपाणिका " इति हैमी । मृगशिरो मृगमस्तकं सार्द्रं सरुधिरम् ॥ १० ॥

रावणः एतदुक्तैरात्मनो मङ्गलमवगम्याक्षिपति—प्रतापमिति ॥ प्रतापाक्रान्तः शैत्यमाश्रयतीति प्रसिद्धम् । तदेव द्योतयति । अपरजलधौ पश्चिमसमुद्रे मज्जति पूर्वसमुद्रे उन्मज्जति । स्वस्य जनिरुत्पत्तिर्यस्मात्तत्कमलम् ॥ ११ ॥

विदेहेति ॥ दृष्टेर्मधुपाङ्गनासाम्यं रामस्य तमालसाम्यमिति । सुगमम् ॥ १२ ॥

हेमेति ॥ वानराणां मध्ये एके वानराः । सुगमम् ॥ १३ ॥

रावणः—( लङ्कायाम् ) भो महोदर सर्वैर्मन्त्रिभिः प्रबोध्यतामयं वीरः कुम्भकर्णः ।

महोदरः—यदाज्ञापयति देवः । ( इति निष्क्रम्य कुम्भकर्णनिद्रालयं जगाम । )

तत्र कुम्भकर्णप्रिया—

विरम विरम नूर्णं कुम्भकर्णस्य कर्णान्न
 खलु तव निनादैरेष निद्रां जहाति ।
इति कथयति काचित्प्रेयसी प्रेक्ष्यमाणा
 मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ॥ १४ ॥

निद्रां तथापि न जहौ यदि कुम्भकर्णः
 श्रीकण्ठलब्धवरकिन्नरकामिनीनाम् ।
गन्धर्वयक्षसुरसिद्धवराङ्गनाना-
 माकर्ण्य गीतममृतं परमं विनिद्रः ॥ १५ ॥

---

विरमेति ॥ काचित् कुम्भकर्णस्य प्रेयसी कर्णाभ्यर्णे चीत्कुर्वन्तं महोदरमिति कथयति । इति किं विरम विरमेत्यादि सर्वत्रानादरे वीप्सा । किंभूता प्रेयसी । मशकवत्कुम्भकर्णगलकरन्ध्रे मुखेन श्वासानापूर्यापोह्य हस्तिभिराक्रममाणस्यापि गलच्छिद्रे मशकवत् । यथा अनेके मशकाः कस्मिंश्चिच्छिद्रे विशन्ति एवं मुखाश्वासेनास्यान्तर्गतं हस्तिसमूहं प्रेक्ष्यमाणा । योऽन्तर्हस्तिभिरपि नावबुद्धः स कथं भवेच्चीत्कारैरिति भावः ॥ १४ ॥

निद्रामिति ॥ यदि यदा तथापि गजाक्रमणमन्त्रिचीत्कारैरपि तदा सङ्गीतमाकर्ण्य विनिद्रो जात इति शेषः। अमृतम् अमृतवन्मधुरं परममत्युत्कृष्टलक्ष्म ॥ १५ ॥

स्रग्धरा

जृम्भासम्भारभीमभ्रुकुटितटनटत्कुम्भकर्णाट्टहास-
व्यासव्याकाशव [illegible]
लीलालोलन्मृणालीमृदुमिथिलसुतासङ्गभूपालहंस
त्सिन्दूरपूर्वाचल [illegible] ः

कुम्भकर्णः—( लङ्कायाम् )

सुप्तोत्थितः कवलयन् पलशैलजालं
तीव्रासवं परिपिबन्नपि कुम्भकर्णः ।
तृप्तिं जगाम न तथेत्यवदत्सुराया
गङ्गां पिबामि यमुनां सह सागरेण ॥ १७ ॥

---

कुम्भकर्णोत्थापनभिया वानरानवलोक्यातिसदयो मारुतिः आशिषमनुवदति—जृम्भेति ॥ रामचन्द्रः पायात् । किंभूतः जृम्भासम्भारेण जृम्भातिशयेन भीमं यत् भ्रुकुटितटं तेन सह नटत् आविर्भवत् कुम्भकर्णाट्टहासस्तस्य व्यासेन विस्तरेण युक्तो यो व्याकोशोऽन्तरालस्तद्युक्तं यद्वक्रं तस्य व्यतिकरेण किमिदमित्यज्ञानेन चकिता ये प्राणिनस्तेषां पुण्यप्ररोहः पुण्योदयस्तद्भयनिवर्तक इति । पुनः लीलायै लोलयन्ती चञ्चला मृणाली पद्मिनी तद्वन्मृद्वी च या मिथिलसुता तस्याः सङ्गे राजहंसः । यथा पद्मिनीसङ्गाद्राजहंसो मोदते तद्वदयमपि सीतासङ्गादिति भावः । पुनः सिन्दूरवदरुणो यः पूर्वाचल उदयगिरिस्तस्य शिखरे शिर इव । शिरः सूर्यस्तस्य शेखरः शिरोरत्नं सूर्यकुलकेतुरिति ॥ १६ ॥

सुप्तोत्थित इति ॥ पलशैलाः मांसगिरयस्तेषां जालं बहुपर्वतोच्चमांसराशिमिति । तीव्रासवमतिमादकमदिरां यदा तृप्तिं न जगाम तदा इत्यवदत् । इति किं सुराया इत्यादि ॥ १७ ॥

रामः—( स्वकटके )

उपस्थितं वीक्ष्य तमाह रामो
लङ्काशिरोनिर्मितजानुदघ्नम् ।
भो मारुते यन्त्रमुदस्तमेतत्
किं नेत्यवादीत्स च कुम्भकर्णः ॥ १८ ॥

कुम्भकर्णः—( रावणसमीपमागमागम्य ) भो राजन् ।
यद्यपि क्षितिपालानामाज्ञा सर्वत्रगा स्वयम् ।
तथापि शास्त्रदीपेन संचरन्त्यवनीश्वराः ॥ १९ ॥
( रामाय जानकी देयेत्यभिप्रायः । )

रावणः—
इदं भ्रातृवचः श्रुत्वा तथेत्याह दशाननः ।
शास्त्रनिःसंशया वाचः सतां कस्य न वल्लभाः ॥ २० ॥

---

उपस्थितमिति ॥ तं कुम्भकर्णं किंभूतं लङ्काशिरः लङ्काशिखरं निर्मितं जानुदघ्नं जानुप्रमाणत्वेन यस्य तम् । उत्थितस्य लङ्काशिखरं जानुप्रमाणमिति भावः । “ प्रमाणे दघ्नादयः ” । भो मारुते एतत्किं यन्त्रमुदस्तम् अष्टधातुघटितं लङ्काप्रक्षेपकरणं यन्त्रम् । यद्वा । यन्त्रं काल उदितः किम् ।“यन्त्रं कालेक्षुचक्रयोः ” इति विश्वः । मारुतिर्नेत्यवादीत् । यन्त्रं नेति च पुनः कुम्भकर्ण इत्यवादीत् १८॥

यद्यपीति ॥ सर्वत्रगा सर्वतोऽखण्डिता सर्वत्र गीयते प्रमाणीक्रियते वा । सुगमम् । संचरन्त्यवटेऽसतामिति पाठे शास्त्रमेव दीपस्तस्मिन्सति असतामशास्त्रवर्त्तिनाम् अवटे गर्त्तरूपे मार्गे संचरन्ति साधव इति शेषः ॥ १९ ॥

इदमिति ॥ तथेति शिरश्चालनेनाङ्गीकारः ।सतां शास्त्रानुवर्त्तिनां शास्त्रनिःसंशया वाचः शास्त्रनिर्णयान्ताः । वद कस्य न वल्लभा इति वा पाठः । सुगमम् ॥ २० ॥

रावणः—( जानकीं न समर्पयामीत्यभिप्रायात् सावज्ञम् )
उत्क्षिप्तस्फटिकाचलेन्द्रशिखरश्रेणीनिघृष्टाङ्गदै-
रेभिः पीनतरैः सुरासुरभयप्राप्तप्रतिष्ठैर्भुजैः ।
संग्रामे मम कुम्भकर्णविजयः किं त्वद्भुजाडम्बरः
प्रत्याशाशिथिलोस्म्यहं व्रज पुनः स्वापाय निद्रालयम्॥

कुम्भकर्णः—( )
राजन्मा गा विषादं परिहर बलविद्विद्विषः शोक-
शल्यं कल्याणान्याश्रयन्तामहमहमिकया नो
भवन्तं जहामि । कः कालः को विधाता किम-
रिकुलभयं को यमः के च याम्या को रामः के
कपीन्द्राश्चलति मयि रणे रोषिते कुम्भकर्णे ॥२२॥

रावणः—( सानन्दम् ) महाबलपराक्रमै राक्षसभटैः
परिवृतो रणप्राङ्गणेऽवतरतु वत्सः ।

कुम्भकर्णः—( साक्षेपं तथा कृत्वा )
अयि कपिकुलमल्लाः किं मुधा यात भीता
न हि जगति भवद्भिर्युद्ध्यते कुम्भकर्णः ।

---

उत्क्षिप्तेति ॥ उत्क्षिप्त उद्धृतो यः स्फटिकाचलः कैलासः किं त्वयेति शेषः । सुगमम् ॥ २१ ॥

राजन्निति ॥ बलवांश्चासौ विद्विट् रामस्तस्य सकाशात् शोकशल्यम् अहमहमिकया पूर्वशौर्यप्रकटनेन।" अहंपूर्वमहं पूर्वं युद्धार्होऽहमिका मता ।" इत्यभिधानचिन्तामणौ । अन्यत् सुगमम् । सर्वकल्याणानि आश्रयन्तां त्वामिति शेषः ॥ २२ ॥

अयीति ॥ अयीति संभावनायाम् । हे कपिकुलमल्लाः हे कपि-

अपि जलधरपोतो लेढि किं स्वल्पकुल्या-
-मपि मशककुटुम्बं केसरी किं पिनष्टि ॥ २३ ॥

अपि च ।

नाहं वाली सुबाहुर्न खरत्रिशिरसौ दूषणस्ताटकाहं
नाहं सेतुः समुद्रे न च धनुरपि यत्त्र्यम्बकस्य त्वयाऽऽत्तम् ।
रे रे राम प्रतापानलकवलमहाकालमूर्तिः किलाहं
वीराणां मौलिशल्यः समरभुविचरः संस्थितः कुंभकर्णः ॥

( ततो गगनमुत्पत्य )

सुग्रीवं बाहुमूले प्लवगबलपतिं कण्ठदेशे भुजेन
क्षिप्त्वा निष्पीड्य गाढं रजनिचरपुरीं संदधानो जगाम ।

---

वराः मुधा भीताः सन्तः किं यात कस्माद्व्रजत । तदुपपादयति नहीति । अत्र युद्धदृष्टान्तद्वयमाह । जलधरपोतो मेघबालोऽपि अल्पतरमेघोऽपीत्यर्थः ।" पोतो वार्याानबालयोः " इति हैमी।" कुल्याल्पा कृत्रिमा सरित् " इत्यमरः । लेढि आस्वादयति । पिनष्टि मारयति । राक्षसबालोऽपि अल्पबलैर्वानरैर्न युध्यते । मम तु का कथेति भावः ॥ २३ ॥

नाहमिति ॥ खरश्च त्रिशिराश्चैतौ राक्षसजातौ आत्तं भग्नं रामस्य यः प्रतापानलस्तस्य यः कवलस्तद्ग्रहणाय महाकालरूपः । अथ वागर्थः । बाल्यादिभिरशनपूर्त्तिर्न जाता मया तु रामप्रतापाग्निस्तृप्तो भविष्यतीत्याह । रामप्रतापानलस्य कवलाय यो महान् कालस्तस्य मूर्तिरेकोऽस्मीति बुभुक्षितरामाग्नेरतिकालो यातस्तत्पूर्तिरद्येति भावः ॥ २४ ॥

सुग्रीवमिति ॥ बाहुमूले कक्षायां गाढं यथा स्यात्तथा निष्पीड्य पुनरचेतनं ज्ञात्वा भुजेन कण्ठदेशे क्षिप्त्वा सन्दधानः सन् सानन्दं

सानन्दं कुम्भकर्णस्तदनु कपिभटस्तस्य तूर्णं सकर्णं
घ्राणं जग्ध्वा जगाम स्वशिबिरमुदरं कूर्परेणाभिहत्य २५

कुम्भकर्णः—

निःश्वस्योत्सृज्य बाष्पं नयनकमलयोश्चात्मनो वारि दत्त्वा
कृत्वा लङ्कोपगूढं सकरुणमपुनर्भावि नीत्वा त्रिशूलम् ।
क्रोधान्धः कालमूर्तिः प्रलयहुतवहाङ्गारनेत्रो विकर्ण-
श्छिन्नघ्राणोऽवतीर्णः पुनरपि समरप्राङ्गणे कुम्भकर्णः २६

तं दृष्ट्वा जीविताशं गिरिवरकुहरं त्रस्तचित्ताः
कपीन्द्राः केचित्पादान्तवातप्रचलितपवनान्दो-
लिताः खे चरन्ति । केचिद्दोर्दण्डचण्डभ्रमणनि-
पतिताः शोणितान्युद्गिरन्ति प्राणान्केचित्प्रवी-
राः कथमपि दधति स्फीतफूत्कारभिन्नाः ॥२७॥

---

यथा स्यात्तथा लङ्कां जगाम । कूर्परेण बाहुमध्यस्थानेन । "स्यात्क-
फोणिस्तु कूर्परः" इत्यमरः ॥ २५ ॥

निःश्वस्येति ॥ नयनकमलयोः शकाशात् बाष्पमुत्सृज्य आ-
त्मनः स्वस्य वारि जलं दत्त्वा सकरुणं यथा स्यात्तथा लङ्कोपगूढं
लङ्कालिङ्गनं कृत्वा । कीदृशं लङ्कोपगूढम् । अपुनर्भावि यत्पुनर्न
भवतीत्यपुनर्भावि । सुगमम् ॥ २६ ॥

तमिति ॥ तम् अरूपं दृष्ट्वा त्रस्तचित्ताः गिरिवराणां कुहरं विवरं
चरन्ति गच्छन्ति । " नागलोकोऽथ कुहरं सुषिरं विवरं बिलम् । "
इत्यमरः । पादान्तवातप्रचलितपवनान्दोलिताः पादान्तवातात्
प्रचलितो वेगवान् यः पवनस्तेनान्दोलिताः सन्तः खे चरन्ति निर्ग-
च्छन्ति । स्फीताः वर्धिताश्च ते फूत्काराश्च तैर्भिन्ना विदीर्णाः ।
अन्यत् सुगमम् ॥ २७ ॥

उत्क्षिप्य शूलमजयं त्रिपुरान्तकस्य
संहारकेतुमिव कोटितडित्प्रभाभिः ।
घोरं ज्वलन्तमुरसि क्षिपति स्म रक्ष-
स्तारापतेस्तदिषुणा रघुणा निरस्तम् ॥ २८ ॥
क्रोधाग्ने र्जाठराग्नेः कपिशिबिरगतो सुद्गरं व्याददानो
वक्त्रे निक्षिप्य कोटिं कवलयति भटानुत्कटान्कुम्भकर्णः।
कांश्चित्पद्भ्यां पिनष्टि श्वसनसहचरा वानराः कर्णरन्ध्रा-
न्निर्गच्छन्त्येक एता पुनरपि दशनैश्चर्वितानत्ति घोरम् ॥
सव्येन सान्द्रशिबिरं स्वकरेण धुन्वन्
व्यात्ताननस्य कटकं तत उत्तरेण ।

उत्क्षिप्येति ॥ केनाप्यजितमित्यजं त्रिपुरान्तकस्य रुद्रस्य शूलं रुद्रप्रसादप्राप्तमिति कोटितडितामिव याः प्रभास्ताभिर्घोरं दुःप्रेक्ष्यं रक्षः कर्तृ कुम्भकर्णः तारापतेः सुग्रीवस्योरसि निक्षिपति सतीत्यन्वयः । रघुणा श्रीरामेण तत् त्रिशूलम् इषुणा बाणेन निरस्तम अन्तरैव खण्डितम् ॥ २८ ॥

तत्क्रोधमनुवर्णयति—क्रोधाग्नेरिति ॥ कुम्भकर्णः क्रोधाग्नेः सकाशात् जाठरो योऽग्निस्तस्मात्सकाशात्क्रोधात्क्षुधाबाधादिति कोटिभटान् कोटिसंख्याकान् वानरमुख्यान् वक्त्रे निक्षिप्य कवलयति। कपिशिबिरः कपिकटकः श्वसनसहचराः उच्छ्वाससङ्गिनः एके वानराः मुखस्था अपि कर्णरन्ध्रान्निर्गच्छन्ति। घोरं यथा स्यात्तथा दशनखण्डितानप्येतान् कर्णद्वारान्निर्गतान् पुनरत्ति पुनश्चर्वयति ॥ २९ ॥

सव्येनेति ॥ सः कुम्भकर्णः सव्येन करेण वामहस्तेन सान्द्रशिबिरं निबिडावमोचनं कटकं धुन्वन् विद्रावयन् ततो विद्रावणानन्तरम्

सुग्रीवमेव कपिवीरवरेषु सत्सु
जग्राह कोपकलितो युधि कुम्भकर्णः ॥३०॥
तातं विलोक्य विषमस्थमथाङ्गदस्तं
गारुत्मतेन भुवि पातयति स्म शत्रुम्
मुक्तोऽपि निःश्वसिति यावदसौ कपीन्द्र-
स्तावद्बबन्ध नरसिंहपदाङ्गदं सः ॥ ३१

दृष्ट्वा नीलस्तदुभयमपि ग्रस्तमाक्रम्य रक्षः-
स्कन्धे मौलौ श्रवणकुहरे घ्राणवक्त्रोदरेषु ।
तीव्रज्वालो दहति कुपितः स्वेन रूपेण वीरः
क्रव्यादोऽभूत्तदनु विकलः प्रोत्थितौ वानरेन्द्रौ ॥

लङ्काशिरस्थो रावणः—

लङ्केश्वरस्तमवलोक्य रणे ज्वलन्तं
कादम्बिनीसहचरामृतवारिधाराम् ।

उत्तरेण दक्षिणहस्तेन सुग्रीवमेव जग्राह इत्यन्वयः
त्वात् । अन्यत् सुबोधम् ॥ ३० ॥

तातमिति ॥ तातं सुग्रीवं गारुत्मतेन गरुडपाशेन शत्रुं कुम्भकर्णं मुक्तोऽपि कुम्भकर्णहस्ताद्गलितः कपीन्द्रः सुग्रीवः यावन्निःश्वसिति सचेतनो भवति तावत् स कुम्भकर्णः पतित्वोत्थितः सन्नरसिंहपदा नरसिंहपाशेन अङ्गदमपि बबन्ध ॥ ३१ ॥

दृष्ट्वेति ॥ तदुभयं सुग्रीवमङ्गदं च ग्रस्तं बद्धं स्वेन रूपेण अग्निरूपेण तदवतारत्वात् रक्षःकर्म राक्षसं दहतीति तदनुदाहमनुलक्षीकृत्य क्रव्यादः कुम्भकर्णः विकलोऽभूत् ॥ ३२ ॥

एतदन्तरा वानरेन्द्रौ सुग्रीवाङ्गदौ कादम्बिनी मेघमाला तत्स-

तूर्णं मुमोच तदुपर्युपलब्धसंज्ञो
भोक्तुं कृतान्त इव नीलनलौ स दध्यौ ॥ ३३ ॥

जाम्बवान्—

दम्भोलिं कुम्भकर्णं गिरिमिव तरसा पातयञ्जानुबन्धं
कण्ठं गाढं विरच्य स्वभुजगुरुमदं जाम्बवानुग्रवेषः ।
निर्मुक्तौ तावभूतामभवदथ मरुत्पुष्पवृष्टिस्तदङ्गे
गुल्फाघातेन रोषाद्रजनिचरवरस्तन्निरस्योपतस्थौ ३४॥

आलक्षितो रघुवरेण सलक्ष्मणेन
कालान्तकादिव रिपोः परिशङ्कितेन ।
स्थानं जगाम हनुमान्समरेऽवतीर्य
माहेश उग्रनरसिंह इवारुणाक्षः ॥ ३५ ॥

---

हायवान् तस्या या अमृतवारिधारा तया लब्धसंज्ञः प्राप्तचेतनः कुम्भकर्णः । अन्यत् सुबोधम् ॥ ३३ ॥

दम्भोलिरिति ॥ उग्रवेशः कोपातिशयात् जाम्बवान् जानुबन्धं यथा स्यात्तथा जानुबन्धं जानुप्रहारं तरसा बलेन कुम्भकर्णमपातयदित्यर्थः । दम्भोलिर्वज्रः गिरिमिव । किं कृत्वा गाढं यथा स्यात्तथा कण्ठं विरच्य गृहीत्वा । स्वभुजयोर्गुरुर्मदो यस्य । अथ तौ नीलनलौ निर्मुक्तावभूताम् । तदङ्गे जाम्बवदङ्गे मरुद्भिर्मुक्ता पुष्पवृष्टिरभवत् । ततो रजनिचरवरः कुम्भकर्णः गुल्फाघातेन तं जाम्बवन्तं निरस्योत्क्षिप्योत्तस्थौ ॥ ३४ ॥

आलक्षित इति॥ माहेशो रुद्रावतारः हनुमान् समरेऽवतीर्य स्थानं शत्रुस्थानं जगाम इत्यन्वयः । किंभूतः रिपोः सकाशात् परिशङ्कितेन निर्भयेन रघुवरेण आलक्षित आलोकितः। "परिर्वर्जने" । यद्वा रिपोः परितः शङ्कां इता यस्मात्तेन । कस्मादिव कालान्तकादिव

मैनाको मेरुशृङ्गस्थित इव हनुमत्पाणिपद्मे नगेन्द्रः
कल्पान्ते मन्दराग्रेऽजन इव समरे मुद्गरः कुम्भकर्णे ।
आर्द्रं क्रव्यादवीरः प्रहितमनिलजेनाच्छिनन्मुद्गरेण
लाङ्गूलेनाञ्जनेयोद्धुतजनितरुषा मुद्गरं द्राक् चकर्ष ॥ ३६ ॥

रामः—

अत्रान्तरे रघुपतिः शरयुग्ममैन्द्रं
द्राक्कुम्भकर्णनिधनाय रणे मुमोच ।
भित्त्वा बिभेद हृदयं धरणीमथैको
मूर्धानमुद्धतमखण्डयदस्य चान्यः ॥ ३७ ॥

हनूमान्—

उद्यन्मरुत्तनयचण्डचपेटघातान्
मूर्धा पपात तुहिने रजनीचरस्य ।
भग्नो भविष्यति यदम्भसि भीमसेनो
बभ्राम पुच्छनिकृतो गगने कबन्धः ॥ ३८ ॥

---

कालः प्रलयस्तत्कर्तुरन्तकादिव उग्रश्चासौ नृसिंहश्च क्रुद्धनरसिंह इव ॥ ३५ ॥

मैनाक इति॥हनुमत्पाणिपद्मे नगेन्द्रः गिरिरिव भाति इति शेषः। क समरे । किंभूते समरे कल्पान्ते कल्पानामतिसमर्थानामपि अन्तो यस्मिन्मन्दराग्रे मन्दरशिरसि अमृतमथनार्थम् मन्दराक्रमणार्थम् अजनो भगवानिव । कुम्भकर्णे मुद्गर इति । शेषं सुबोधम् ॥ ३६ ॥

अत्रान्तरे इति ॥ ऐन्द्रम् इन्द्रप्रदत्तं द्राक् शीघ्रं शरद्वयकृत्यमाह । भित्त्वेत्यादिपदद्वयेन । सुबोधम् ॥ ३७ ॥

उद्यदिति ॥ तुहिने उत्तरभागे हिमवदभ्यर्णे यदम्भसि यस्य मूर्ध्नि कपालस्थजले पुच्छनिकृतः हनुमत्पुच्छताडितः ॥ ३८ ॥

देवाः सर्वे विमानान्यपनयत रवेः स्यन्दनो यातु दूरं
रे रे शाखामृगेन्द्राः परिहरत रणप्राङ्गणं राक्षसाश्च ।
वज्रत्रस्ताञ्जनाद्रिप्रतिनिधिरवधिः सर्वविस्मापकानां
लङ्कातङ्कैकहेतुर्निपतति नभसः कौम्भकर्णः कबन्धः ३९

( मृतः कुम्भकर्णः । )

उत्क्रान्तोऽपि स्वदेहात् प्रवरसुरवधूदोर्भिराकृष्यमाणः
प्राणत्राणाय भर्तुः पुनरपि समरापेक्षया नारुरोह ।
संगीतैर्नारदाद्यैर्मृदुमुरजरवैः स्तूयमानो विमानं
वीरः संग्रामधीरः शिव शिव स कथं वर्ण्यते कुम्भकर्णः॥

लङ्काशिखरस्थो रावणः—( सविस्मयम् )

मरुच्चन्द्रादित्याः शतमखमुखास्ते क्रतुभुजः
पुरद्वारे यस्याः सभयमुपसर्पन्त्यनुदिनम् ।
प्रकोपव्याकम्पाधरतटपुटैर्वानरभटैः
समाक्रान्ता सेयं शिव शिव दशग्रीवनगरी॥४१॥

इति श्रीहनुमन्नाटके कुम्भकर्णवधो नाम एकादशोऽङ्कः।

---

अथ लक्ष्मणो रामवीर्यमधिकृत्य कबन्धमनुवर्णयति—देवा इति ॥ प्रतिनिधिस्तुल्यः । सर्वमेव सुबोधम् ॥ ३९ ॥

उत्क्रान्तोऽपीति ॥ स्वदेहात् राक्षसान्तरात् उत्क्रान्तः उद्गतोऽपि अप्सरोभिर्वरणार्थमाकृष्यमाणोऽपि विमानं नारुरोह इत्यन्वयः। अनारोहणे हेतुः । भर्तुः रावणस्य प्राणरक्षणाय पुनरपि संग्रामेच्छयेति नारदाद्यैर्नारदमुखैर्गन्धर्वैः । कीदृशैः सुष्ठु गीतानि येषां तैः ४०

मरुदिति ॥ ते प्रसिद्धाः इन्द्रः मुखमिव मुखं येषां ते यस्याः लङ्कायाः पुरद्वारे बहिर्द्वारे। "पुरद्वारं तु गोपुरम्" इत्यमरः। समाक्रा-

---

( रावणः सक्रोधं तूर्णं कटकं पुत्रमिन्द्रजितं कुम्भसम-रयज्ञे अध्वर्युं वृणोति स्म । इन्द्रजित् भ्रातरं कुम्भक-र्णवधामर्षमूर्च्छितः सीतापतिवधे बद्धलक्ष्यः समरनासी-रेऽवतीर्णः । इतो लक्ष्मणो धनुर्गुणटणत्कारैर्धरणीं गग-नान्तरमापूरयन् कोपानलज्वालावलीभिः सलङ्काधिपां लङ्कां कवलयन् घोरसमरनासीरेऽवतरति स्म । )

रावणिः—( लक्ष्मणमवलोक्य )

**नाहं सौमित्रिकोपस्य जानेऽल्पमपि कारणम् ।**
**नूनं चञ्चलबुद्धीनां स्नेहकोपावकारणौ ॥ १ ॥**

---

न्ता सर्वतोवरुद्धा प्रकृष्टकोपेन यो व्याकम्पः विशेषेणानमन्ततस्त-अधरपुटतटानि येषां ते ॥ ४१ ॥

इति श्रीहनुमन्नाटकटीकायां कुम्भकर्णवधो नाम एकादशोऽङ्कः ॥ ११ ॥

"सेनामुखं तु नासीरम्" इत्यमरः। नाहमिति ॥ अहम् आत्मनि सौमित्रिं प्रति यो मदीयः कोपस्तस्याल्पमपि कारणं न जाने येनै-नमुपहन्यामीति । ननु चेत्त्वयि कारणं नास्ति तर्ह्यमौ कथं रुष्टस्त-त्राह । चञ्चलबुद्धीनां लक्ष्मणसदृशानां स्नेहकोपावकारणौ निर्निमि-त्तौ । यद्वा। अः विष्णुस्तत्प्रेरितौ । यद्वायमर्थः । नूनमिति ज्ञात्वा चलबुद्धीनामसमीक्ष्यकर्तॄणां मादृशां स्नेहकोपौ अकारणौ विष्णु-निमित्तौ तस्य शुभाशुभकर्तृत्वात् ॥ १ ॥

अपि च।

क्षुद्राः संत्रासमेते विजहत हरयो भिन्नशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः।
सौमित्रे तिष्ठ पात्रं त्वमसि मम रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥२॥

सुग्रीवमारुतिनलाङ्गदनीलमुख्या
बाष्पान्धकारजलदान्तरितं प्रचण्डम्।
तं रावणिं जलदमण्डलमास्थितं नो
पश्यन्ति तान्प्रहरति स्म स घोरबाणैः ॥ ३ ॥

मायारथं समधिरुह्य नभस्थलस्थो
गम्भीरकालजलदध्वनिरुज्जगर्ज।
बाणैरपातयदहो फणिपाशबद्धै-
स्तौ मेरुमन्दरगिरी पविनेव शक्रः ॥ ४ ॥

---

क्षुद्रा इति ॥ क्षुद्रा अल्पतराः हरयोऽपि वानराः एनं मदुपस्थितं संत्रासं विजहत त्यजत। कुत इत्यत आह। युष्मद्देहेष्विति। लज्जावत्त्वे निमित्तमाह। भिन्नेति। हे सौमित्रे त्वमपि तिष्ठ रणादुपरम। कुत इत्यत आह। मम रुषां पात्रं नासीति। तर्हि किं करिष्यसि इत्यत आह। राममिति ॥ २ ॥

सुग्रीवेति ॥ सुग्रीवादयस्तं रावणिं नो पश्यन्ति। स मेघनादः घोरैर्बाणैस्तान् सुग्रीवादीन्प्रहरति स्मेत्यन्वयः। अदर्शने हेतुमाह। बाष्पजलकणा अन्धकारश्च तद्युक्तेन जलदेनान्तरितम् आच्छादितम्। "बाष्पो जलकणे बाष्पं नेत्रवारिणि चाप्यथ।" इति धरणिः ३

मायेति ॥ कालजलदस्य प्रलयमेघस्येव ध्वनिर्यस्य सः फणिपाशो नागपाशः तदावृत्तैर्नागपाशात्मकैरिति तौ रामलक्ष्मणौ अ-

अत्रान्तरे पूर्ववैरमनुस्मरन्ती चक्रवाकी सरोवरस्था–

शशाप यो मे दयितं स रामः
सलक्ष्मणो रावणिबाणजालैः।
रणे हतोऽयं मुदमुद्वहन्ती
चन्द्रोदये नृत्यति चक्रवाकी ॥ ५ ॥

सरमा–

श्रुत्वा हतिं दशरथात्मजयोर्विमान-
मारुह्य पुष्पकमवाप्य दशाननस्य।
आज्ञां निनाय सरमा जनकस्य पुत्रीं
सीता विदीर्णहृदयाऽसि दिवं गताऽसिं ॥ ६ ॥

जानकी–

किं भार्गवच्यवनगौतमकाश्यपानां

---

पातयत् बबन्ध। वागर्थः। शक्रः पविना मेरुमन्दरागिरी इव तौ रामलक्ष्मणौ अपातयत् पातयामासेत्यर्थः। अहो किमर्थेऽव्ययम् ॥४॥

"शशाप यो मे" इति पद्यं कस्यापि समस्यारूपम्। अत्रानुपयुक्तम् ॥ ५ ॥

श्रुत्वेति ॥ हतिं बन्धनं दशाननस्याज्ञामवाप्य जनकस्य पुत्रीं पुष्पकविमानमारुह्य गतासि सादरं यथा स्यात्तथा "खड्गक्षेपणयोरसिः" इति धरणिः। गत आक्षेपो यत्र तत् असिदिवं निनाय असियुक्ता दिवं संग्रामभूमिं निनाय। "द्यौः स्त्रियां रणनाकयोः" इति हलायुधः। असिपदेनातिभीषणत्वमुक्तम्। किंभूता सरमा सीतार्थं विदीर्णं हृदयं यस्याः सा सरमा गतासि सादरं यथा स्यात्तथा असिदिवं यज्जयादियुक्तरणं निनाय मायया प्राप इति वाक्यार्थः ॥ ६ ॥

किमिति ॥ अहहेति खेदे। भार्गवादीनां सा वाणी अनृता

वाणी वसिष्ठमुनिलोमशकौशिकानाम् ।
जातानृताप्यहह आलपिता त्वया मे
स्या मग्नचूचुककुचा सधवेति राम ॥ ७ ॥

हा राघव प्रियतम स्फुरतीह वामो
बाहुस्तथा नयनमप्यनृतं किमेतत् ।
नाद्यापि यन्मधुरनिर्मलदृष्टिपातैः
संभावयस्यपि विलासगिरा भुजाभ्याम् ॥ ८ ॥

उक्तं च यतः ।

संमानितापि न तथा मुदमभ्युपैति
मात्रानुजेन जनकेन तथाग्रजेन ।
आश्वासितापि रमणी रमणेन तूर्णं
प्रेम्णा यथा मधुरनिर्मलदृष्टिपातैः ॥ ९ ॥

---

जाता । सा का या त्वया सह मे मां प्रति कर्मणि षष्ठी । इति आलपिता। इति का सीते त्वं सधवा स्याः न कदाचिद्विधवात्वं प्राप्नुहीति । कुत इत्यपेक्षायामाह । कीदृशी मग्नौ च तौ चूचुकौ च एवंभूतौ कुचौ यस्याः सा। उक्तं च। "आभोगमग्रशिरसौ यस्याः स्तः सततं कुचौ । सा नारी सधवा नित्यं न कदाचित्तदप्रियः॥" इति बहवः ॥ ७ ॥

सा भवतु नामानृता शकुनोऽप्यनृत इत्याह–हेति ॥ बाह्वादिकमप्यनृतं कथं जातमित्यत आह । अद्यापि एतावन्मयोक्ते सति निर्मलदृष्टिपातैर्मां न संभावयसि न सुखयसीति ॥ ८ ॥

उक्तं च यत इति ॥ ९ ॥

प्राणेश्वरः प्रतिगिरं न ददाति रामो
हा वत्स लक्ष्मण ममापनयेन रुष्टः ।
मद्वत्सलस्त्वमपि नोत्तरमाददासि
भ्रान्त्वा भुवं मम कृतेऽथ दिवं गतौ वा ॥ १० ॥
स्वर्गादिमौ झटिति माऽनवलोकयन्तौ
न ब्रह्मलोकमधिगच्छत एव तावत् ।
प्राणा दिवं व्रजत साधुगिरा मुमोच
श्वासानिलं जनकजा सह सङ्गरेण ॥ ११ ॥

समरादपहृतं विमानं सरमया रावणभयादित्यभिप्रायः ।

अत्र वैकुण्ठाद्गरुडः—

हाहाकारं निशम्य त्रिभुवनविदितं रावणेः कर्म घोरं
क्रोधाग्नेर्धूमधाटीदलितरिपुकुलं त्रासयन् राक्षसेन्द्रम् ।

---

राममुक्त्वा लक्ष्मणमुपालभते—प्राणेश्वर इति ॥ हा कष्टं वत्स लक्ष्मण ममापनयो नयाभावस्तेन रुष्टः प्राणेश्वरो रामः प्रत्युत्तरं न ददाति रक्षोहस्तगतायाः प्राणधारणमनयः । मद्वत्सलस्त्वमपि मातृस्नेहवान् । त्वमप्युत्तरं न ददासि तन्मया ज्ञातं भुवं भ्रान्त्वा मम कृते दिवं गतौ । वा वितर्के ॥ १० ॥

प्राणेति ॥ हे प्राणाः यावत् मा इति मां स्वर्गेऽप्यनवलोक्य तौ इमौ रामलक्ष्मणौ स्वर्गाद्ब्रह्मलोकं नाधिगच्छतः न व्रजतः तावज्झटिति शीघ्रं यूयमिति शेषः । दिवं व्रजतेत्यन्वयः । एवमुक्ते सति साधुगिरा सीते विषादं मा कार्षीरियं जीविष्यतीति सरमोक्त्या सङ्गरेण संग्रामेण सह जनकजा श्वासानिलं मुमोच । उच्छ्वासं त्यक्तवती रामावलोकनं चकारेति भावः ॥ ११ ॥

हेति ॥ क्रोधाग्नेः सकाशात् या धूमधाटी धूमातिशयस्तेन दलितं रिपुकुलं येन तृतीयचरणार्थेन राक्षसेन्द्रं त्रासयन् स्रवदसृतर-

पक्षाघातप्रचण्डप्रचलितपवनध्वस्तशैलेन्द्रपातैः
संप्राप्तो वैनतेयः स्रवदमृतरसो जीवयामास रामम्॥१२॥

रावणिः—( सभयं रणसंकटमुपलभ्य सप्रपञ्चम् )

पापो विरच्य समरे जनकस्य पुत्रीं
हा राम राम रमणेति गिरं गिरन्तीम् ।
खड्गेन पश्यत वदन्निति रे प्रवीरा
मायामयीं शिव शिवेन्द्रजिदाजघान ॥ १३ ॥
द्विधा कृतां तां पुनराददानो
मायारथस्थोम्बरवर्त्मना च ।
ब्रह्मोपदेशात्स निकुम्भिलाद्रे-
र्न्यग्रोधमूलावटमाजगाम ॥ १४ ॥

रामः—( समरचत्वरे )

दृष्ट्वा मायाजनकतनयाखण्डनं रामचन्द्रो

---

स इति जीवनाय गर्भितो हेतुः । वागर्थः । राममनुलक्षीकृत्य दृष्ट्वे-त्यर्थः । रामं दृष्ट्वा स्वयं सचेतनोऽभूदित्यर्थः । तदवमानश्रवणाचे-तनत्वात् ॥ १२ ॥

रामसंजीवनात्सर्वान् जीवयामासेत्यर्थः । रावणिः सभयं रणस-ङ्कटमुपलक्ष्य संप्राप्य रे वीराः पश्यत इति वदन् सन् इन्द्रजित् मेघनादः अन्यत् सुगमम् ॥ १३ ॥

द्विधेति ॥ ब्रह्म वेदस्तस्योपदेशात् अथर्वणमन्त्रोपदेशात् यद्वा ब्रह्मा प्रजापतिस्तस्याज्ञातः वक्ष्यमाणशक्तित्वात् । निकुम्भिलः त्रिकूटान्तःपाती गिरिः अवटं कुण्डं तत्राभिचारकर्मणा मायारथ-मुत्पादयितुं जगाम इत्यभिप्रायः ॥ १४ ॥

दृष्ट्वेति ॥ गुर्वीं मूर्च्छामासाद्य दीर्णं रामशोकात्सीताखण्डनाद्वा

गुर्वीमुर्वीतलमुपगतो दीर्णमासाद्य मूर्छाम् ।
तत्पादाग्रे पुनरनुजनिश्चेतनां प्राप्य रामं
कृत्वोत्सङ्गे स्मरसि न गिरं व्याहरन्नित्यरोदीत् ॥ १५ ॥

लक्ष्मणः—

सिञ्चत्येनं विकचनलिनीगर्भनिर्मुक्तवारां
धारासारैर्मलयजरसै रामधर्मोऽप्रमाणम् ।
यस्मादेतां त्वमपि पदवीमास्थितो ब्रह्मशापा-
दित्यालापैर्विलपति दृशा लक्ष्मणश्चक्रवाक्यः ॥ १६ ॥

सा यथा ।

एकेनाक्ष्णा प्रविततरुषा वीक्षते व्योमसंस्थं
भानोर्बिम्बं सजलगलितेनापरेणात्मकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी
द्वौ संकीर्णौ विसृजति रसौ रौद्रकारुण्यसंज्ञौ ॥ १७ ॥

---

दीर्णं विदलितं सीतापुत्रीत्वाभिमानात् गिरं वेदवाणीं न स्मरसि । "अजो नित्यः शाश्वतोऽयं पुराणः" इति स्मरणात् । जामदग्न्यदत्तमुग्धत्वरूपं वा ॥ १५ ॥

सिञ्चेति ॥ मलयजरसैश्चन्दनोदकैः पुष्पितकमलमकरन्दयुक्ताः याः वारस्तासां धारेव सारो येषु तैः रामं सिञ्चति वियोगतापशान्त्यर्थमिति भावः । चक्रवाक्यः दृशा हेतुना रामदुःखदर्शनात्सानन्दं चक्रवाकी क्षणं विलापहेतुः । कुतः यस्मात् त्वयाऽपीश्वरोऽप्यतिधार्मिकोऽपि एतां पदवीं मूर्च्छनरूपां ब्रह्मशापात्त्वं मुग्धो भवेति जामदग्न्यवचनादास्थितः अतः धर्मोऽप्रमाणं शाप एव प्रमाणमिति अत्र गुर्वाज्ञापालनं धर्मस्तत्कृतेऽपि दुःखावगमात् धर्मेऽप्रामाण्यमिति ॥ १६ ॥ १७ ॥

( तत्र निकुम्भिलाद्रौ न्यग्रोधमूलेऽवटे )

रावणिः—( सत्वरम् )

कुण्डे विभीतकसमिद्भिरथार्धचन्द्रे
शक्रेभकुम्भदलनः पलमाजुहाव ।

हनूमान्—

शत्रुंजये रथवरेऽर्धसमुद्गतेऽग्रे-
र्यज्ञं बभञ्ज तरसा हनुमानुपेत्य ॥ १८ ॥

लक्ष्मणः—( रणप्राङ्गणे शनैश्चरादाप्य दशरथेनार्पितं संहारास्त्रमनुस्मृत्य सानन्दं शोकमपहाय ) रे रे मायारथारूढप्रौढबाहुशालिन् मेघनाद मायां विभिद्य त्वां यमलोकं प्रस्थापयामि पश्य ।

दोःस्तम्भास्फालकेलिस्फुटविकटरवध्वस्तघोरान्धकारः
संहारास्त्रं नियोज्य स्वधनुषि धरणीं पाणिनाहत्य वीरः ।
क्रोधान्धो रावणस्य ज्वलदनलशिखामुद्गिरन्पाणियुग्मे
स्थित्वा चिक्षेप सौमित्रिरथ दृढशिरो मेघनादस्य साद्रि॥

इति हनुमन्नाटके इन्द्रजिद्वधो नाम द्वादशोऽङ्कः ॥१२॥

---

कुण्डे इति ॥ शक्रेभकुम्भदलनः मेघनादः अर्धचन्द्राकारे कुण्डे पलं स्वमांसमिति ज्ञातव्यम् । तरसा बलेन ॥ १८ ॥

दोःस्तम्भेति ॥ घोरान्धकारः आत्मीयानां कातर्यरूपध्वान्तः सौमित्रिः रावणस्य पाणियुग्मे मेघनादस्य दृढशिरः छित्त्वा चिक्षेप इत्यन्वयः । सर्वाजेयत्वमत्र दृढत्वम् । कीदृशं दृढशिरः साद्रि समु-

# अथ त्रयोदशोऽङ्कः ।

( सक्रोधम् )

लङ्केश्वरः सुतवधारुणवक्रचक्र-
स्तत्रैकवीरनिधनां क्षिपति स्म शक्तिम् ।
सौमित्रिवक्षसि रुचार्द्धपथे ज्वलन्तीं
क्षिप्ताम्बुधौ हनुमता तरसा गृहीत्वा ॥ १ ॥

( रावणः शक्तिग्रहणमवलोक्य सक्रोधं ब्रह्माणं हन्तुमुद्यतः ।
ब्रह्मा सभयं नारदं सस्मार । )

नारदः—( प्रविश्य ) तात किमिति स्मृतोऽहम् ।

ब्रह्मा—वत्स यावन्मारुतिः समरभूमौ तावदेकवीरघातिनी शक्तिर्लक्ष्मणं न भिनत्ति तस्मिन्पुनरभिन्ने लङ्केश्वरो मां नितरां हनिष्यतीति मत्वा समरतः पवनसूनुः स्थानान्तरं नेयः ।

---

कुटम् " वज्रैरेव समाकीर्णं मुकुटं साद्रिरुच्यते।" इत्यलंकृतिवृत्तौ । अन्यत् सुगमम् ॥ १९ ॥

इति श्रीमिश्रमोहनदासविरचितायां हनुमन्नाटकदीपिकायां
टीकायाम् इन्द्रजिद्वधो नाम द्वादशोऽङ्कः ॥ १२ ॥

लङ्केति ॥ चक्रं समूहः दशवदनत्वात् अर्धपथे अन्तरैव तरसा बलेन एकवीरघातिनी एकस्यासाधारणस्य वीरस्य निधनं यतः सकाशात् ॥ १ ॥

नितरां हनिष्यति आक्षिपति गुरोराक्षेपो हननातिरिक्त इत्युक्तत्वात् द्रागिति। द्राक् शीघ्रं भङ्गोऽत्रावमाननम्। कीदृशात् समरतः ल-

नारदः—यदाज्ञापयति तात। (इति निष्क्रम्य)

द्राङ् नारदोऽथः पितृभङ्गभयादनैषीत्
स्थानान्तरं समरतः पवनस्य सूनुम्।
लङ्कापतेर्दृढचपेटभवत्प्रहारा-
ज्जग्राह रामरिपुरत्र विधेस्तु शक्तिम्॥ २॥

रावणः—

दृष्ट्वा शक्तिग्रहणमधिकं राक्षसेन्द्रो कृतान्त-
क्रोधाध्मातो ज्वलितहृदयाग्निस्फुलिङ्गोग्रवेषः।
तामेव स्म क्षिपति निधने लक्ष्मणस्योग्रमन्त्रै-
र्भित्त्वा वक्षस्थलमपि गता भूतलं कूर्मराजम्॥ ३॥

शक्तिः प्रौढोग्रतेजःप्रलयसमुदिताद्रावणात्कोपमाना-

---

ङ्कापतेर्दृढाः करतलप्रहाराः यस्मिन् तस्मात् केनापि मिषेण स्थानान्तरं विधेर्ब्रह्मणः सम्बन्धिनी वा। अत्रेयं कथा। तुष्टेन ब्रह्मणाऽस्मै शक्तिर्दत्ता अनया मुक्तया मनुष्यवीरो नश्यतीति॥ २॥

दृष्ट्वेति॥ रावणः राक्षसेन्द्रोऽधिकं यथा स्यात्तथा कृतान्तस्येव क्रोधस्तेनाध्मातो भर्जितश्चासौ ज्वलितो हृदयाग्निश्च तस्य स्फुलिङ्गास्तत्सदृशैर्नेत्रादिभिरुग्रो वेषो यस्य एवंभूतो यातः। किं कृत्वा हनुमता कृतं स्वशक्तिग्रहणं दृष्ट्वा अत एवोग्रमन्त्रैः कृत्वा लक्ष्मणनिधने तन्निधननिमित्तं शक्तिं क्षिपति स्म। शक्तिमिति शेषः। सापि लक्ष्मणवक्षःस्थलं भित्त्वा भूतलं प्रति कूर्मराजं गता बिभेदेत्यर्थः। भूतलभेदनेन कूर्मराजस्य चरमतया कूर्मभेदनमाक्षिप्यते नतु वास्तवमिति भावः॥ ३॥

तमेव भेदनप्रकारं विवृणोति—शक्तिरिति॥ कोपमानाद्रावणात्सकाशाद्भुजगपतिपुरं जगाम इत्यन्वयः। किंभूता प्रौढानि यान्युग्राणि

द्रवन्ती दीपयन्ती ज्वलितदश दिशो लक्ष्मणं वेधयन्ती।
हाहाकारप्रलापं सकलजनभवं देवदैत्येन्द्रकम्पं
ब्रह्माद्यैः स्तूयमाना भुजगपतिपुरं कारयन्ती जगाम॥४॥

हनूमान्—( तत्रान्तरे स्थानान्तरादागत्य )

पश्चात्तापगते बिभीषणबले क्षीणे प्लवङ्गेश्वरे
मूढे जाम्बवति प्लवङ्गमगणेऽसंभूय भूयः स्थिते।
शक्तिप्रौढमहाप्रहारविधुरे मूर्च्छां गते लक्ष्मणे
हा रामे विलपत्यहो हनुमता प्रोक्तं स्थिरैः स्थीयताम्॥५॥

( अथ बिभीषणः रात्रौ ज्वलदुल्मुकं करे कृत्वा शिबिरं पर्यटन् प्रौढशक्तिज्वालावलीकवलितान् वानरान्पश्यति स्म को जीवति न वेति। तत्र जाम्बवन्तमेवापश्यदुपविष्टं मूर्च्छारहितं नान्यम्। )

जाम्बवान्—( बिभीषणम् )

अञ्जनी सुप्रजा येन मातरिश्वा तु राक्षस।

---

तेजांसि तैः प्रलयाय वीरक्षयाय समुदिता ये वीरप्रौढाः शौर्यगर्वितास्तेषामुग्रतेजसां प्रलयायेत्यर्थः। देवदैत्येन्द्रकम्पं यथा स्यात्तथा सकलजनभवं हाहाकारयुक्तं प्रलापं कारयन्ती। भुजगपतिपुरं कीदृशं ब्रह्माद्यैः स्थिरो भवेत्यादिवाक्यैः स्तूयमानम्॥ ४॥

प्रोक्तम्। रावणाहतलक्ष्मणाः वयं कथं क्व वा यास्याम इति पश्चात्तापः भूयः पुनरपि असंभूय अगोचरीभूय स्थिते सति अत्र वानरा एव न सन्तीत्येवं स्थिते स्थिरैः स्थीयतां धैर्यमवलम्ब्य स्थीयताम्। अन्यत् सुबोधम्॥ ५॥

अञ्जनीति॥ येन हनूमता अञ्जनी माता सुप्रजाः सत्पुत्रवती तु

हनूमान् वानरश्रेष्ठः कामं जीवति वा न वा ॥ ६ ॥

विभीषणः–

नैव राजनि सुग्रीवे नैव रामे न चाङ्गदे ।
आर्येण दर्शितः स्नेहो यथा वायुसुते परः ॥ ७ ॥

जाम्बवान्–भो राक्षसेन्द्र विभीषण ।

तस्मिन् जीवति दुर्धर्षे हतमप्यहतं बलम् ।
हनूमति गतप्राणे जीवन्तोऽपि हता वयम् ॥ ८ ॥

( ततः सत्वरं जाम्बवता सह विभीषणः पृष्ठोपस्थितं मारुतिं विलपन्तं रामचन्द्रमनुस्मरति । )

रामः–( विभीषणमवलोक्य )

गिरीन्यास्यन्त्यमी वीरास्त्वयि वत्स दिवं गते ।
मरिष्यामि ससीतोऽहं क्व यास्यति विभीषणः ॥ ९ ॥

भुक्ते मयि प्रथममत्सि फलानि वत्स
सुप्ते करोषि शयनं मयि जीवति त्वम् ।

---

पुनः मातरिश्वा वायुः सुप्रजाः सत्पुत्रवानिति योज्यम् । पुंस्त्वे विसर्गलोपः । " पुंस्त्वे विसर्गलोपः " इत्येतच्चिन्त्यमिति भाति ॥६॥

नैवेति ॥ आर्येण भवता यथा परः स्नेहः वायुसुते दर्शितस्तथा नान्येष्विति किम् ॥ ७ ॥

अद्य भूतरणे राज्यादिकं नापेक्ष्यं बलशौर्यादिकमेवापेक्ष्यमिति भावः । एतेन हनूमतः शौर्यातिशयप्रश्नः ॥ ८ ॥

गिरीनिति ॥ सुबोधम् ॥ ९ ॥

भुक्ते इति ॥ कृतभोजने मयि जीवति त्वं प्राणान् जहासि तत्किं वितर्के । वितर्कद्वयं द्योतयति । वनवासादिक्लेशभीतः सन् सुरलोकसुखाय अथवा सापत्नभावं प्रकटीकरोषि किम् । अयमत्रासहायो

प्राणान् जहासि सुरलोकसुखाय किं वा
सापत्नभावमहह प्रकटीकरोषि ॥ १० ॥

( इति तारस्वरैः सर्वे रुदन्ति । )

रामः—

हा वत्स लक्ष्मण धिगस्तु समीरसूनुं
यस्त्वां रणेऽपि परिहृत्य पराङ्मुखोऽभूत् ।
गोपायतीह भरतस्तु ममानुजः किं
यस्त्वामधिज्यधनुरुद्धतशक्तिपातात् ॥ ११ ॥

(अलमस्मद्वृथायौवनशस्त्रभरेणेति सशरं धनुस्त्यक्तुमिच्छति ।)

हनूमान्—( निजापराधेन सकरुणं भरतबाहुवर्णनाकर्णनेन साभ्यसूयं सत्वरं गारुडस्थानमभिनीय रामपुरतः स्थित्वा ) देव पश्य ।

सप्ताम्भोनिधयो दशैव च दिशः सप्तैव गोत्राचलाः
पृथ्व्यादीनि चतुर्दशैव भुवनान्येकं नभोमण्डलम् ।
एतावत्परिमाणमात्रकटके ब्रह्माण्डभाण्डोदरे
क्वासौ यास्यति राक्षसो रघुपते किं कार्मुकं त्यज्यते १२

---

नश्यत्विति सपत्नस्य शत्रोर्भावः सापत्नं तस्य भावो विकारः सापत्नभावः ॥ १० ॥ ११ ॥

उत्प्लुत्य वन्दनं गारुडस्थानम् । " यदम्बरं समारुह्य विक्रमाविष्कृतौ स्फुटम् । दैन्यकोपातिशयतो वन्दनं गारुडं मतम् ॥ " इति हैमी । सप्तेति । गोत्राचलाः भूमिभागगिरिवराः द्वीपपर्वता इति । एतावन्त एव परिमाणमात्रो यः कटको विस्तारो यस्य तस्मिन्

रामः—भो मारुते तथापि मामुन्मथ्य जागर्ति लङ्काभटः।

हनूमान्—देव पश्य नीचैः सह मैत्री न कर्तव्या।यतः।

खलः करोति दुर्वृत्तं नूनं पतति साधुषु।
दशाननोऽहरत्सीतां बन्धनं स्यान्महोदधेः ॥ १३ ॥
दैवादप्युत्तमानां परिहरति यदा दुर्जनो वा कथंचित्
मानं नाप्नोति तेषामनुजनितगुणानेव कुत्राधिकत्वम्।
स्वर्भानुर्भानवीयान्हरति यदि पुनः शीतरश्मेर्मरीचीन्
ब्रह्माण्डस्येह खण्डे तदपि रघुपते किं ग्रहेशत्वमेति १४॥

रामः—अये हनुमन्।

किं तया क्रियते वीर कालान्तरगतश्रिया।
अरयो यां न पश्यन्ति बन्धुभिर्वा न भुज्यते ॥१५॥

---

ब्रह्माण्डरूपभाण्डकोशे तत्र तावत्सप्ताब्धिगिरिद्वीपभुवनादीनां मात्रैव नत्वानन्त्यमिति भावः। "विस्तारे कटकः पुमान्" इति धनंजयः ॥ १२ ॥ १३ ॥

दैवादिति॥ अत्र निषेधे वाशब्दः। पूर्वं तु सतां मानः अनाहार्य एव।यदा यदि तत्रापि क्वचिदेकवारं नासकृत् तत्रापि दैवात् तत्रापि दुर्जन उत्तमानां मानमपहरति तदा तेषां सताम् अनुजन्मानः अनुक्षणं पश्चाज्जनिताः उत्पादिताः गुणास्तानेव नाप्नोति यत्तेष्वधिकं हेयोपादेयतया गृहीतं गुणं कुत्र कुतः प्राप्नोति न कुतोऽपि। तत्र दृष्टान्तमाह ।यदि स्वर्भानुः राहुः भानवीयान् मरीचीन् शीतरश्मेश्च हरति आच्छादयति तर्हि इहापि ब्रह्माण्डस्य खण्डे रोदस्यां किं ग्रहेशत्वमेति नैतीत्यर्थः। एवं रावणेनापि दैवान्मान उन्माथितः तर्हि किं भवत्सादृश्यं गत इति भावः ॥ १४ ॥

किं तयेति॥ कालान्तरगतश्रिया कालान्तरे गता श्रीस्तया॥१५॥

नूमान्—(लक्ष्मणं विषमस्थितमवलोक्य लक्ष्मणवक्षो भिन्नं दृष्ट्वा सविस्मयो राममू) हनूमति कृतप्रतिज्ञे दैवमदैवं यमोऽप्ययमः । पुनर्देव पश्य ।

पातालतः किमु सुधारसमानयामि
निष्पीड्य चन्द्रममृतं किमुताहरामि ।
उद्दण्डचण्डकिरणं ननु वारयामि
कीनाशपाशमनिशं किमु चूर्णयामि ॥ १६ ॥

रामः—(आत्मगतम्) यद्यदुक्तमनेन महावीरेण तत्तदिदानीमेव कृत्वा दर्शयति।परं तु तत्करणादकालेऽपि महाप्रलयः स्यात् । (इति विचार्य प्रत्याह)

वैद्यं सुषेणमधुनैव तदानय त्वं
लङ्कापतेरनुचरोऽपि यतो भिषक् सः ।
नैवान्यथा वदति रामगिरा हनूमान्
पर्यङ्कसुप्तमचिरेण तमानिनाय ॥ १७ ॥

सुप्तोत्थितं रघुपतिर्भिषजां वरिष्ठं

---

पातालत इति ॥किमत्र वितर्के। अहम् उद्दण्डो रावणः उद्धृतो दण्डो यस्य एकं वा पदम् । कीनाशो यमः ॥ १६ ॥

वैद्यमिति ॥ तत्तस्मादद्यैव रात्रावेव सुषेणाख्यं वैद्यमानय । ननु वैरिभृत्यः कथमानीयतामत आह। यतोऽसौ भिषक् वैद्यः शत्रोरप्यन्यथा न वदति इति रामगिरा पर्यङ्कसहितमेव शीघ्रमानीतवान् १७

सुप्तेति ॥ तरुणोपचारं शीघ्रविशल्यकरणीनामवल्ल्या सः वैद्यः रजन्यामेव न तु दिवा तत्रापि हिमरश्मिरुचैव न तमसि तत्रापि

पप्रच्छ तं सकरुणं तरुणोपचारम् ।
स व्याजहार हिमरश्मिरुचा रजन्यां
जीवत्यसौ द्रुहिणशैलविशल्यवल्ल्या ॥ १८ ॥

( तत्र रामेणाहूताः वानरभटाः द्रुहिणाद्रिगमनाय रामपुरतः स्वस्वपराक्रमानुरूपं समयावधिमूचुः । )

नलस्त्रिरात्रं पुनरेति गत्वा
तत्रैव मैन्दद्विविदौ द्विरात्रम् ।
सुग्रीवनीलौ पुनरेकरात्रं
वीरोऽङ्गदो यामचतुष्टयेन ॥ १९ ॥

( रामः सभयम् आर्त्तः संकुचितमुखकमलः समरसंकटे भवतो रुद्रावतारस्य मारुतेः साशङ्कं मुखकमलविकाशं पश्यति । )

हनूमान्—( सत्वरं सकरुणं गारुडस्थानमास्थायाञ्जलिपुटमभिनीय ) देव क्षणं स्तम्भ्यतामात्मा यावदेनं भिषक्चक्रचूडामणिं लङ्कां प्रवेश्यागच्छामि ।

( तथा कृत्वा )

नीत्वा लङ्कां सुषेणं पुनरनिलसुतः प्रार्थयामास रामं
देवाज्ञां देहि वीरास्तव हितकरणोपस्थिताः सन्ति सर्वे ।

---

द्रुहिणशैले या विशल्यवल्ली तयैव नान्यथा जीवति ॥ १८ ॥

नल इति ॥ त्रिरात्र्यवच्छिन्नं कालम् एकरात्रमहोरात्रमिति ज्ञेयम् । सर्वत्रैवम् ॥ १९ ॥

तत्रात्मजवेनोत्तार्यं वक्तुं तद्देशावधिमाह—नीत्वेति ॥ इतः स्था-

लक्षाणां षष्टिरास्ते द्रुहिणगिरिरितो योजनानां हनूमान्
तैलाग्रेः सर्षपस्य स्फुटनखपरस्तत्र गत्वात्र चैमि ॥२०॥

रामः–( सहर्षम् ) तथा करोतु वीरः ।

हनूमान्–

ध्यात्वाऽत्मानं प्रणम्य प्रभुमवनिसुतावल्लभं तस्य वाक्यं
नीत्वायोध्यांगमिष्यस्यखिलकुशलतामानयिष्यस्यपीति
चण्डोड्डीनं चकार द्रुतमथ जननी लक्ष्मणस्योपलभ्य
स्वप्ने व्यालः समूलं कवलयति भुजं वाममुत्तस्थुषीति२१

प्रोवाच कोसलसुतापुरतोऽद्भुतं सा
स्वप्नं च सा मुनिवसिष्ठपुरोहितस्य ।
नियोज्य सशरं धनुरादधानं
शान्तिं चकार भरतं मुनिराज्यहोमैः ॥ २२ ॥

---

नात् द्रुहिणगिरिर्योजनानां लक्षाणां षष्टिः षष्टिलक्षयोजनपरिमितोऽस्तीत्यर्थः । अतिदूरश्रवणात् विचिकित्सन्तं प्रत्याह।अहं तत्र गिरौ गत्वा यामि आगच्छामि । ननु कदा गच्छसीत्यत आह । किंविशिष्टः तैलाग्रेर्दीपवर्तिज्वालायाः सकाशात् सर्षपस्य गौरराजिकायाः स्फुटनं स एव परः अवधिर्यस्य यावद्दीपाग्नौ सर्षपः स्फुटति तावद्गत्वाऽऽगच्छामीति तात्पर्यम् ॥ २० ॥

ध्यात्वेति ॥ आत्मानं वायुरूपिणं रुद्ररूपं वा तस्य रामस्य वाक्यमिति संदेशं नीत्वा । इति किम् अयोध्यामित्यादि । अखिलकुशलतां समस्तस्वकीयकुशलताम् अथ तत्प्रयाणानन्तरं लक्ष्मणस्य जननी इति स्वप्नमुपलक्ष्य दृष्ट्वा उत्तस्थुषी उत्थितवती । इति किं व्यालः सर्पः समूलं वामं भुजं कवलयति ॥ २१ ॥

प्रेति ॥ सा सुमित्रा सा कौसल्या मुनिः स्वप्नज्ञानवान् स चासौ वसिष्ठः पुरोहितश्च मुनिर्वसिष्ठः ॥ २२ ॥

हनूमान्–( तत्र द्रोणाद्रिशिखरे )

दृष्ट्वा सर्वांस्तुहिनकिरणोद्यत्प्रभास्तत्र
वल्लीरत्नान्यमरखदिराङ्गारभास्वन्ति वीरः ।
भ्रान्त्वा दोर्भ्यां गिरिमुदहरन्नुत्पपातैष तातं
सस्माराऽयं द्रुतमुपगतस्तद्बलेनोज्जहार ॥ २३ ॥

भरतवसिष्ठौ–( तत्रायोध्यायां शान्तिमण्डपे कुण्डसमीपस्थौ )

हुत्वा श्रीखण्डकाण्डं सतगरकुसुमं पुण्डरीकं मृणालं
कर्पूरोशीरगर्भं प्रचुरघृतयुतं नारिकेलं जुहाव ।
तूर्णं पूर्णाहुतिं स ज्वलदनलनिभं शैलमादाय वीरः
प्राप्तस्तत्राञ्जनेयः स किमिति भरतस्तं शरेणाजघान२४

---

द्रोणो नाम्ना द्रुहिणगिरिरिति ब्रह्मणो गिरिरिति ज्ञेयम् । दृष्ट्वेति ॥ तत्र शैले सर्वा वल्लीः रत्नानि दृष्ट्वा वा । किंभूताः वल्लीः तुहिनकिरणश्चन्द्रस्तद्वत् उद्यन्ती भा यासां ताः एतेन सर्वासां साम्यमुक्तम् । किंभूतानि रत्नानि अमलेत्यादि। तदज्ञाने भ्रान्त्वा तदन्वेषणाय भ्रमित्वा दोर्भ्यां गिरिमेवोदाहरत् । यदा एषः गिरिः नोत्पपात नोन्मूलितवान् तदा स हनूमान् तातं वायुं सस्मार ।अयं वायुः द्रुतमुपगतः तदा तद्बलेन सह तं गिरिं हनूमान् उज्जहारेत्यर्थः ॥ २३ ॥

हुत्वेति ॥ श्रीखण्डकाण्डं चन्दनखण्डं नारिकेलमेव पूर्णां जुहाव हुतवान् तत्र पूर्णाहुत्यवसरे आञ्जनेयः प्राप्तः सः भरतः तं हनूमन्तम् इति शरेण ताडयामास । इति किम् अयं स किम् इति वाक्यस्यायमर्थः येन कालरूपेण सुमित्रायाः मातुर्वा भुजः समूलः कवलीकृतः सोऽयं किम् अथवा यज्ञहन्तारं घण्टासुरं प्रलयकालानल-

( तदा भरतबाणेन भिन्नो हनुमान् भरतदोर्दण्डमुक्तकाण्डप्रचण्डप्रहारमूर्च्छितो

त्प्राणान्परित्यक्तुमिच्छन् )

पुङ्खावशेषभरतेषुललाटपट्टो
हा राम लक्ष्मण कुतोऽहमिति ब्रुवाणः ।
संमूर्च्छितो भुवि पपात गिरिं दधानो
लाङ्गूलशेखररुहेण सकेसरेण ॥ २५ ॥

तत्र वसिष्ठभरतादयः सर्वे—( सविस्मयम् )

सर्वे निशम्य सहलक्ष्मणरामनाम
तत्रोपगम्य हनुमत्पदयोर्निपेतुः ।
वृत्तं च तस्य वचनादपनीय शल्यं
मूर्च्छां जहार स मुनिर्गिरिजौषधीभिः ॥ २६ ॥

---

भरव्यं भगवान् मुनिर्वसिष्ठो व्याचष्टे सोऽयं किमिति भ्रान्त्या भरतस्तं हनूमन्तं शरेणाजघान ॥ २४ ॥

अयं चिरजीवीति विधिलिखिताक्षरपङ्क्तिः।पुङ्खेति ॥ पुङ्खावशेषः यो भरतेषुर्बाणः तद्युक्तो ललाटपट्टो यस्य सः हनूमान् केसरेण गिरिं दधानः भुवि पपात । किंभूतेन केसरेण लाङ्गूलस्य शेखरोग्रभागस्तत्र भवेन ॥ २५ ॥

सर्वे इति ॥ लक्ष्मणेन सहितं सलक्ष्मणं चेदं रामनाम निशम्य तस्य हनूमतो वचनात् वृत्तं सीताहरणसेतुबन्धनलक्ष्मणशक्तिपातौषधिप्रयाणरूपमुपगम्य ज्ञात्वा शल्यं ललाटस्थबाणमपनीयोद्धृत्य मुनिर्वसिष्ठो मूर्च्छां हनूमतो जहार ॥ २६ ॥

हनुमान् ( साभ्यसूयम् )

जिज्ञासया भरतबाहुपराक्रमस्य
रामस्तु तस्य युधि लक्ष्मणशक्तिभेदे ।
श्रान्तोऽहमित्यथ गिरिं नय तं कुमारं
वाक्यं जगाद हनुमान् भरतं सरोषः ॥ २७ ॥

(रामलक्ष्मणयोः समरसङ्कटमुपलभ्य गगनमण्डलभ्रान्त-निजभुजाटोपनाय दोधूयमानधनुर्गुणटणत्कारमभिनीय ।)

रामः—( अत्रान्तरे )

वत्सोत्तिष्ठ धनुर्गृहाण रिपवः सैन्यं विनिघ्नन्ति नः
किं शेषेऽद्य निराकृताः किमरयः प्रत्याहृता वा प्रिया ।
भ्रातर्देहि वचो बिभेति हृदयं भ्रातः प्रियं छिन्धि मा
कैकेयि प्रियसाहसे सुतवधान्मातः कृतार्था भव ॥ २८ ॥

श्रुत्वेति तस्य वचनं भरतः शराग्रे
साद्रिं कपिं समधिरोप्य गुणे नियोज्य ।
मोक्तुं दधे झटिति कुण्डलिनं चकार
तुष्टाव तं परमविस्मयमागतः सः ॥ २९ ॥

---

जिज्ञासेति ॥ गोपायतीह भरतस्तु ममानुजः किमिति रामेण स्तुतस्य हनुमान् भरतमिति जगाद । इति किं हे भरत अहं श्रान्तोऽस्मि त्वं गिरिं नय प्रापय । ननु गिरिप्रापणमेव किमुक्तं नान्यच्छौर्यं तत्राह । कुमारं सुकुमारम् इति भारवाहकत्वायोगात् २७॥२८

श्रुत्वेति ॥ शराग्रे साद्रिं कपिं समधिरोप्य तं शरं गुणे नियोज्य मोक्तुं त्यक्तुं झटिति शीघ्रं धनुः कुण्डलिनं कुण्डलपर्यन्ताकृष्टं

हनुमान्—

उत्तीर्य बाणात्कुशलं गृहीत्वा
संपूज्य बाहुं भरतस्य वाग्भिः ।
मनो दरिद्रस्य यथा दिगन्तं
तथा हनूमान् शिबिरं जगाम ॥ ३० ॥

अद्रिं रुद्रावतारः प्रलयसमुदितद्वादशार्कानुकारं
द्रोणं दोष्णा दधानः कटकनिकटतामागतोऽप्यर्धरात्रे ।
दिग्भागोत्तालदृष्टिस्तरलतरसरस्तीरमास्थाय वीर-
स्तारं धीमानरोदीत्तदनु सह मुदा वाहिनीमाजगाम ३१॥

( पर्वतोद्योतनेन सूर्योदयभ्रमात्सरोवरस्थं विकसितकमल-मालोक्य प्रातराशङ्कया लज्जावानरोदीत् । तदनु दिग्भागानवलोक्य सूर्योदयमपश्यन् मुदं प्राप्य हा ज्ञातं पर्वतोद्योतनेन सूर्योदयभ्रमात् कमलविकास इति हर्षेण सह स्ववाहिनीं जगाम।)

हत्वा मायामहर्षीन् रजनिचरवरां कन्धकालीमुदग्रां
ग्राहीरूपां प्रमथ्य प्रबलमथ बलं राक्षसान्मर्दयित्वा ।

---

चकारेत्यर्थः । यदा धनुः कुण्डलीकृतं तदा परमविस्मयमागतः स हनुमान् भरतं तुष्टाव साधु साध्विति शशंस ॥ २९ ॥ ३० ॥

तरसा रामकटकं जगामेति भावः। दिगिति। दिग्भागे पूर्वदिक्प्रदेशे उत्ताला दृष्टिर्यस्य सूर्योदयभ्रमवशात्। एतेन जवित्वं द्योतितम् ३१॥

सिंहावलोकनन्यायेनास्य गमनमादित आह—हत्वेति ॥ द्रोणाद्रिसमीपे मायामुनीन् राक्षसान् नाम्ना कन्धकालीं रजनिचरवरां ग्राहीरूपां सरसि मकरीरूपधारिणीं प्रबलं यथा स्यात्तथा रावणग्राहि-

जित्वा गन्धर्वकोटिं झटिति ततमणिज्वालमादाय शैलं
प्राप्तः श्रीमान्हनूमान्पुनरपि तरसा नंदितस्तत्पुरस्तात्॥

रामसुग्रीवादयः सर्वे-( सहर्षम् )

यो मैन्दद्विविदादिवानरचमूचक्रस्य रक्षाकरः
संहर्त्ता रणसङ्गभैरवरवोल्लासस्य लङ्कापतेः।
सीतातङ्कमहान्धकारहरणप्रद्योतनोऽयं हरिः
संप्राप्तः पवनात्मजः पटुमहः श्रीकण्ठवैकुण्ठयोः॥३३

कपिकटकभटानां गण्डगोपालनामा
समरशिरसि धीरो योऽञ्जनायास्तनूजः।

---

तान् राक्षसान् समुद्रोपकण्ठं मर्दयित्वा पुनरिन्द्रेण तद्बलजिज्ञासया प्रहितां गन्धर्वाणां कोटिं झटिति जित्वा तत्पुरस्ताद्रामाग्रे तरसा शीघ्रं बलेन वा ॥ ३२ ॥

य इति ॥ रावणस्य रणसङ्गे यो भैरवः रवः परत्रासनशब्दस्तेन य उल्लास आनन्दस्तस्य संहर्ता श्रीकण्ठो रुद्रः वैकुण्ठो रामस्तयोः पटुरधिको महः आनन्दो यस्मात् तदंशतद्भक्तत्वात्। "मह उद्धव उत्सवः" इत्यमरः। सुगमम् ॥ ३३ ॥

कपीति ॥ अथ वानराः लक्ष्मणमङ्गलमाशंसन्तः गण्डगोपालनामा हनूमान् लक्ष्मणस्य विशदलक्ष्मीं मूर्च्छाहरणरूपां दिशतु ओषध्यानयनेन प्रयच्छतु। गण्डात्कपोलमध्यात् गोपं सूर्यं लाति गृह्णातीति गण्डगोपालः गावः किरणान् पातीति गोपः। यद्वा। गावः जलानि पिबतीति। "सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः।" इत्युक्तत्वात्। अत्रेयं कथा। बालेन हनुमता फलभ्रमादज्ञाय रविमण्डलं ग्रस्तं पुनर्ब्रह्मणे प्रत्यर्पितम्। उक्तमपि भैरवसहस्रनामस्तोत्रे। "महेशो गण्डगोपालो खट्वाङ्गी गीतनायकः।" इत्यादि। स कः य आत्मनो रामस्य श्रीमच्चरणनमस्कारेण नित्यसत्योदयश्रीः प्र-

दिशतु विशदलक्ष्मीं लक्ष्मणस्यात्मनः श्री-
चरणनलिननत्या नित्यसत्योदयश्रीः ॥ ३४ ॥

रामः—

एकैकस्योपकारस्य प्राणान् दास्यामि ते कपे ।
प्रत्यक्षं क्रियमाणस्य शेषस्य ऋणिनो वयम् ॥३५॥

( सदयम् )

अङ्गेष्वेव जरां यातु यत्त्वयोपकृतं कपे ।
भवान्प्रत्युपकारार्थमापत्सु लभतां पदम् ॥ ३६ ॥

लक्ष्मणः—

आलेपितो हनुमता गिरिजौषधीभि-
र्मूर्च्छां विहाय सशरं धनुराददानः ।
रामारविन्दतरणिर्धरणीधरात्मा
लङ्कापतेः कुपितकाल इवोपतस्थौ ॥ ३७ ॥

---

काशकः सत्यप्रतिज्ञ इति । कपिकटकभटानां मध्ये यः समरशिरसि धीरः । यद्वायमर्थः । गण्डगोपालनामा कपिकटकभटानां विशदलक्ष्मीं दिशतु सत्पुत्रेणैकेन तज्जातीयाः श्लाघ्यन्त इति ध्वनिः। लक्ष्मणस्यात्मनो भ्रातुः रामस्य चरणादिकं पूर्ववत् ॥ ३४ ॥

एकैकस्येति॥ हे कपे हे हनुमन् प्रत्यक्षं क्रियमाणस्य लक्ष्मणविशल्यकरणस्योपकारस्य ते तुभ्यं प्राणान् दास्यामि। ते त्वया क्रियमाणस्य वा दत्तेषु प्राणेषु पुनस्तदभावात् शेषस्यैकस्यैव समुद्रलङ्घनादिरूपस्योपकारस्य वयम् ऋणिन एव। "ऋत्यकः" इति सन्ध्यभावः॥

अङ्गेष्विति ॥ मदङ्गेष्वेव उपकारहेतुरापदस्तिं सा तव मास्त्वित्याशीः उपकारः ॥ ३६ ॥

आलेपित इति ॥ धरणीधरः शेषस्तदवतारः। अन्यत् सुगमम् ३७

रामः—(क्रोधारुणः प्रोत्फुल्लत्खदिराङ्गारनेत्रो धनुर्गुणटणत्कारमभिनीय सहर्षं सबापं सपुलकं च लक्ष्मणं गाढमालिङ्ग्य) हा लक्ष्मण प्रौढशक्ति भेदखेदं जहि मम हृदयपर्यङ्के। हा मेघनादकुलकमलिनीप्रालेयवर्ष वत्स एतावतीं वेदनां न वेत्सि।

लक्ष्मणः—आर्य।

ईषन्मात्रमहं वेद्मि स्फुटं यो वेत्ति राघवः।
वेदना राघवेन्द्रस्य केवलं व्रणिनो वयम्॥ ३८॥

इति श्रीहनुमन्नाटके लक्ष्मणशक्तिभेदो नाम
त्रयोदशोऽङ्कः॥ १३॥

## अथ चतुर्दशोऽङ्कः।

रावणः—(ततः प्रातःकाले लोहिताक्षं दूतमाहूय समादिशति।) रे लोहिताक्ष वानरवाहिनीं गत्वा राममिति ब्रूहि। अये राम जामदग्न्यं निर्जित्य यस्त्वया हरप्रसादपरशुर्गृहीतस्तं रावणाय प्रयच्छ ततस्तव सीतां प्रयच्छामि।

---

ईषदिति॥ ईषदल्पार्थे। वेदनां च स्फुटयति। वेदना दुःखं राघवेन्द्रस्य तव। वयं केवलं व्रणिनः इति। वयमित्यानन्दादुन्मादः ३८॥

इति श्रीहनुमन्नाटके श्रीमिश्रमोहनदासविरचितायां दीपिकायां
लक्ष्मणशक्तिभेदो नाम त्रयोदशोऽङ्कः॥१३॥

लोहिताक्षः—यदाज्ञापयति देवः । (इति गगनमुत्पत्य रामशिबिरे ततो रामं नमस्कृत्योपस्थितः ।)

रामः—(तं रावणदूतं ज्ञात्वा पृच्छति ।) अये लोहिताक्ष किं करोति राक्षसगणः ।

लोहिताक्षः—देव ।

अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतर-
द्विशल्यां सौमित्रेरयमुपनिनायौषधिवराम् ।
इति स्मारं स्मारं त्वदरिनगरीभित्तिलिखितं
हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥ १ ॥

रामः—(विहस्य) किमर्थमागतोऽसि ।

लोहिताक्षः—देव भृगुपतिं निर्जित्य गृहीतं हरप्रसादपरशुं रावणाय प्रयच्छ । ततस्तव सीतां समर्पयिष्यति लङ्केश्वरः ।

रामः—(विहस्य) दूत पश्य ।

पौलस्त्यप्रणयेन तावकमतिं स्मृत्वा मनो मोदते
देयो नैष हरप्रसादपरशुस्तेनाधिकं ताम्यति ।

---

अधाक्षीदिति ॥ अधाक्षीत् अदीदहत् । विशल्यां शल्यनिवर्त्तिकां स्मारं स्मारं स्मृत्वा स्मृत्वा । "भयहेतौ द्वे वाच्ये" । सुबोधम् १॥

पौलस्त्येति ॥ हे दूत स रावणः मम गिरा मदीयवचनेनैव त्वया इति वाच्यः । इति किं हे पौलस्त्य तावकमतिं त्वदीयां बुद्धिं स्मृत्वा विचार्य मनो मोदते परंतु प्रणयेन प्रीत्या हरप्रसादपरशुर्न देयः । तेन दत्तेन परशुना स रावणोऽधिकं यथा स्यात्तथा

यद्वाच्यः स दशाननो मम गिरा दत्ता द्विजेभ्यो मही
तुभ्यं ब्रूहि रसातलं बलभिदे निर्जित्य किं दीयताम्॥२॥

(अथ रामाय देवराजः मातलिं रथवरं वितरति स्म। रामोऽपि हनूमन्तं रथध्वजाग्रमारोप्य स्वयं रथारोहणं नाटयति। तथाविधं समालोक्य लोहिताक्षो निष्क्रान्तः।)

रावणः—(लङ्काशिखरस्थः) अये लोहिताक्ष कोऽसौ दाशरथेर्ध्वजे वर्त्तते।

लोहिताक्षः—देव।

हेलोल्लङ्घितवारिधिर्जनकजाविश्लेषशुष्यन्मनः
कौसल्यासुतदैन्यपाटनपटुर्ग्रस्तांशुभूमण्डलः।
निर्दग्धाखिलराक्षसेन्द्रनगरः सौमित्रिसंजीवना-
योत्खातौषधिपर्वतश्च मरुतः पुत्रो ध्वजे वर्त्तते॥३॥

रावणः—(सत्वरं मन्दोदरीमन्दिरं प्रविश्य) अयि मन्दोदरि।

---

नाम्यति ग्लानिमेति। यद्वा। एकं पदं पौलस्त्येनास्मासु प्रणयः कृतस्तेन तावकमतिं त्वदीयां बुद्धिं रावणस्त्वमपि मूर्ख इति भावः। अन्यदेहीति चेत्तत्राह। मही द्विजेभ्यो दत्ता तुभ्यं रसातलं दत्तम्। ब्रूहि त्वमेव कथय भवन्तं निर्जित्य बलभिदे कथं दीयतामिति। अयमर्थः। पूर्वं तु परशुरदेयः रावणाय चेद्दीयते तर्हि तस्यानिकोपः स्यात् तथापि दीयते परं त्वेष इन्द्राय रक्षितः पृथ्वीरसातलाभावे तस्य देयत्वाभावात्॥ २॥

हेलोल्लङ्घितेति॥ जनकजाविश्लेषशुष्यन्मनो यस्य स चासौ कौसल्यासुतश्चेति। तस्य दैन्यपाटने दूरीकरणे पटुर्विदग्धः। सुबोधम्॥ ३॥

रामाय प्रतिपक्षवृक्षशिखिने दास्यामि वा मैथिलीं
राघवसायकैर्विनिहतः स्वर्गं गमिष्यामि वा ।
कथयस्व देवि कतमः पक्षो गृहीतस्त्वया
सुश्राव्यं पदमस्मदीयमगमन्मन्मात्रशेषं बलम् ॥ ४ ॥

मन्दोदरी—( विहस्य ) अयि प्राणनाथ लङ्केश्वर ।
दृष्ट्वा दैन्यं भगिन्याः श्रुतखरनिधनं मातुलस्यापि नाशं

रणं यो न जातस्तदानीं
सोऽयं नष्टे कुलेऽस्मिन्कथमिव गमितो जायते ते विवेकः ५

रावणः—( सापत्रपं साभ्यसूयम् )
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामठिकाविलुण्ठनपरैः पीनैः किमेभिर्भुजैः ।

---

रामायेति ॥ हे नीतिज्ञे कार्याकार्यविदग्धे प्रतिपक्षाः शत्रव एव वृक्षास्तेषां दाहार्थं शिखिनेऽग्निरूपाय कतमं सीतादानं स्वर्गप्रापणं वा पदं स्वकीयबुद्धिस्थानं सुश्राव्यं स्वकीयः सिद्धान्तः सुश्राव्य इति । " पदं निर्णयलोकयोः" इति हैमी। बलं सैन्यमगमत् व्यतीतम् । किंभूतं बलं मन्मात्रशेषम् अहमेक उर्वरित इति भावः॥ ४ ॥

अयीति ॥ खरेत्युपलक्षणम् । अर्थात्खरत्रिशिरोदूषणानां यो विवेकः स्वर्गं यामि सीतां ददामीति वा तदानीं भगिन्यादिहननश्रवणेन जातो यो विवेकः गमितो नष्टोऽपि कथमेव जायते कथं जात इति लोकोक्तिः ॥ ५ ॥

धिगिति ॥ स्वर्गग्रामठिका स्वर्ग एव ग्रामस्तत्र विलुण्ठनं रत्नसंचयस्तस्य लुण्ठनं प्रसह्याहरणं तत्र परैस्तत्परैः " विलुण्ठं रत्न-

धिक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसभटान् जीवत्यहो रावणः॥६॥

मन्दोदरी–( सकरुणम् )

शोकं लङ्केश मा गाः कुरु चिरमपुनर्भावि गाढोपगूढं
देवाज्ञां देहि योद्धुं समरमवताराम्यस्मि सुक्षत्रिया यत्।

रावणः–( विदीर्यमाणहृदयः )

मैवं कान्ते स्वकान्ते तरुणय करुणां प्राणरङ्कः किमेकं
लङ्कां संत्यज्य शङ्कां शिव शिव समरायोद्यतो राक्षसेन्द्रः ७

अथ रामाज्ञया वानरभटाः–

उद्यद्दिक्पालकोलाहलबहलमदावग्रहोग्राभिरक्ष्णां
ताराभिर्दीप्यमानं दिशि विदिशि दशग्रीवमुद्ग्रीवयन्तः।
एते निःशेषसेतुग्रथनसमधिकैः शस्त्रिणः शैलपादै–
रुद्दामानः कपीन्द्रा रजनिचरपुरीमुत्तरेण प्लवन्ते ॥ ८ ॥

---

संचयः" इति विश्वः। मे रावणाय अयं धिक्कारः। यतः पूर्वं तु अरय एव तत्राप्यरिषु तापसोऽयं सोऽपि तापसमात्रोऽपि अत्रैव मत्समीप एव तत्रापि राक्षसभटान् कुम्भकर्णमेघनादादीन् जीवति अयमेव धिक्कारः ॥ ६ ॥

शोकमिति ॥ गाढोपगूढं गाढालिङ्गनं हे कान्ते मयि करुणां दैन्यं मा तरुणय मा दीपय। यः एकः निरतिशयवीरोऽहं प्राणरङ्कः प्राणलुब्धः किं नेत्याह। राक्षसेन्द्र इत्युक्त्वा इति शेषः। लङ्कां सन्त्यज्य भयमपि सन्त्यज्य समरायोद्यतोऽभूत्। यद्वा। शङ्कास्यामस्तीति तां शङ्कावतीं लङ्कामिति वा ॥ ७ ॥

उद्यदिति ॥ ते कपीन्द्राः उत्तरेण उत्तरमार्गेण प्लवन्ते निरुन्धन्ति

( जलमध्ये रुद्रपादाद्रिशिखरगतो रामरावणयोर्युद्धं निरीक्ष्यमाणो रुद्रः कपिभटैः संवेष्टितां लङ्कां विलोक्य )

मरुद्रुद्रादित्यौ शतमखमुखास्ते क्रतुभुजः
पुरद्वारे यस्याः सभयमुपसर्पन्त्यनुदिनम् ।
प्रकोपव्याधेर्याधरतटपुटद्वानरभटैः
समाक्रान्ता सेयं शिव शिव दशग्रीवनगरी ॥ ९ ॥

सुग्रीवेण—

अस्त्रं यत्प्लवगाधिपेन विहितं पौलस्त्यवक्षस्तटे
सङ्घट्टानलदत्तदावविपदः सीदन्ति भूमीरुहाः ।

रावणेन—

उत्पाट्य प्रहिताः स्वशैलशिखरे लङ्केन्द्रहस्तावली-
पिष्टोऽयं निजकुण्डनिर्झरजलैर्जम्बालपिण्डायते ॥१०॥

---

उत्प्लुत्यारोहन्ति वा। उद्दामानः उच्छृङ्खलाः अक्ष्णां ताराभिरुद्दीप्यमानं दशग्रीवम्। किंभूताभिः रावणभङ्गदर्शनायोद्यन्तो ये दिक्पालास्तेषां कोलाहलाज्जातो यो बहलः मदः बहुतरगन्धस्तस्यावग्रहो निरोधस्तेनोग्राभिः देवदर्शनादेवादैन्यसंदेशिनीभिरित्यर्थः। एते वानराः शस्त्रिणः शस्त्रवन्तः ॥ ८ ॥ ९ ॥

अस्त्रमिति ॥ भूमीरुहा वृक्षाः सीदन्ति भस्मीभवन्ति । तद्धेतुमाह। किंभूता भूमीरुहाः पौलस्त्यो रावणस्तस्य वक्षस्तटे संघट्टो मेलनं तज्जातो योऽनलस्तेन दत्ता दावविपत् दावाग्निदुःखं येषां ते । रावणेनापि स्वशैलस्त्रिकूटशिखरः उत्पाट्य सुग्रीवाय प्रहितः अयं शिखरः निज आत्मीयो यः कुण्डस्ततो ये निर्झराः प्रस्रवणास्तेषां जलैर्हेतुभिः जम्बालपिण्डः शैवालपिण्डवत् दृश्यते । " कुण्डस्तटे

तथैतेनोद्धृत्य स्फटिकशिखरी सोऽपि विदधे
 समन्तादामूलत्रुटितवसुधाबन्धविधुतः ।
अमुं येनाद्यापि त्रिपुरहरनृत्यव्यतिकरः
 पुरस्तादन्येषामपि शिखरिणामुल्लसयति ॥ ११ ॥

रावणः—( सक्रोधं रथारोहणं नाटयति । )

भेरीमर्दलशङ्खतालनिकरस्वानोल्लसत्काहली-
निःसाणस्वनपूर्णकर्णकुहरो निर्यन्नगर्या बभौ ।
युद्धार्थं दशकन्धरो रथगतो माणिक्यमौलिर्यशो-
दीपादीपितमस्तको जनकजारामो विधेः कर्मणा॥१२॥

---

ह्रदे कुण्डम् " इति धरणिः । पिण्डत्वं द्योतयति । लङ्केशहस्तपङ्-क्त्या पिष्टः पिण्डीकृतः पुनः पुनः कन्दुकवत् उत्पतनेनातिरिक्तभङ्गात् पिण्डीभूतः स्रवज्जलः शिखरो जम्बालपिण्डवद्दृश्यत इति भावः ॥ १० ॥

उत्पाटने प्रयोजनमाह—तथेति ॥ यथा त्रिकूटशिखरः उत्पाटितः तथानेन रावणेन स्फाटिकगिरिरुद्धृत्योत्पाट्य समन्तादामूलम् अभिव्याप्य त्रुटितो यो वसुधाबन्धस्तेन विधूतः विशेषेण कम्पितः विदधे कृतः।सोऽपि स्फटिकशिखर्यपि अद्यापि येन उत्पाटनेनान्येषामपि शिखरिणां पुरस्तादग्रे अमुं रावणं पुरहरः रुद्रस्तदर्थं यो नृत्यव्यतिकरः नृत्ये सति व्यतिकरः कोपातिशयस्तमुल्लसयति शिक्षयति स्मारयतीत्यर्थः । कोऽर्थः यथा तदुत्पाटने रुद्रस्तुष्टः तथैतेषामपि उत्पाटने नन्दयित्वा भवन्तं रक्षिष्यतीति भावः ॥ ११ ॥

भेरीति ॥ दशकन्धरः विधेः कर्मणा आज्ञया प्राक्तनकर्मप्रेरणयेति यावत् । यद्वा । विधेर्ब्रह्मणः शक्तिदानादिषु ब्रह्मसंबन्धस्य सत्त्वात् नगर्याः सकाशाद्युद्धार्थे निर्यन् गच्छन् सन् बभौ इत्यन्वयः। यशो विजय एव दीपस्तेनादीपितः प्रकाशितः मस्तकः ब्रह्मलोको

नीचैर्ववौ परिमितः पवनो वनेषु
मन्दीचकार तरणिः खरतां करेषु ।
रक्षःपतिर्गगनमाप्तमवेक्ष्य साक्षा-
न्नद्यो ययुः स्थगिततुङ्गतरङ्गभङ्गाः ॥ १३ ॥

( आकाशे )

यदा नीलो लङ्काधिपसुभटकोदण्डशिखरे
स्थितश्चञ्चद्बाष्पाकलितमृगतृष्णान्वितगिरिः ।
तदैवं देवानां मतिरजनि दिङ्मण्डलजुषां
धनुःशृङ्गे भृङ्गस्तदुपरि गिरिस्तत्र जलधिः ॥ १४ ॥

---

येन तत्पर्यन्तविजयीति भावः । तद्गमनेऽपि तत्र प्रतापगमन-सत्त्वात् । “ ब्रह्मावासशिरोविष्णुभञ्जिकास्वपि मस्तकः । ” इति शाश्वतः । जनकजारामः जनकजाया रामः कामो यस्य । वागर्थे । जनकजायाः सकाशादरामः अक्रीडो यस्य मृत्युः इति । अन्यत् सुबोधम् ॥ १२ ॥

नीचैरिति ॥ खरतां तीक्ष्णत्वं गगनम् आकाशं प्रति आप्तं प्राप्तमवेक्ष्य दृष्ट्वा। यद्वा एकमेव पदम्। गे आकाश ये गाः देवगणास्तेषां नमः प्रह्वत्वं प्राप्तम् येन । गगने यत्रावलोकयति तत्रैव देवा नमन्ति इति भावः । “ गकारो गगने द्वीपे गणेशे गोगणेऽपि च । ” इति शाश्वतः । “ णमु प्रह्वीभावे ” इत्यस्याप्रत्यये नमः ॥ १३ ॥

यदेति ॥ रावणस्य प्रत्यासन्नत्वादानन्दे देवानामुन्मादावसरे नीलो वानरः लङ्काधिपश्चासौ सुभटस्तस्य कोदण्डाग्रभागे स्थितोऽभूदिति शेषः । किंभूतः चञ्चन्तो ये बाष्पाः क्रोधाश्रूणि गिरिप्रस्रवणवारीणि तैराकलिता करम्बिता मृगतृष्णा तदन्वितो गिरिर्यस्मिन् सः हस्ते धृतगिरिर्नीलः रावणधनुरग्रे स्थित इति तात्पर्यार्थः । तदा दिङ्मण्डलजुषां स्वस्वदिगाकाशस्थितानां देवानां मतिरेवं

रावणस्य—

साश्चर्यं तत्र रामे सपटु भटमुखे सव्यथं देवतौघे
साशङ्कं रामयुद्धे कपिषु सविनयं लक्ष्मणे साश्रुपूरम् ।
सासूयं भ्रातृकृत्ये सभयमनिलजे सत्रपं चात्मकृत्ये
क्षिप्रं तद्वक्त्रचक्रं रजनिचरपतेर्भिन्नभावं बभूव ॥ १५ ॥

---

जनिता । एवं किं रावणहस्तधनुःशिखरे भृङ्गस्थानीयो नीलः श्यामत्वात् नीलहस्ते गिरिस्तत्र गिरौ जलस्थानीया तृष्णा गिरिप्रस्रवणा अयमेवोन्मादः ॥ १४ ॥

साश्चर्यमिति ॥ रजनिचरपते रावणस्य वक्त्रचक्रं मुखसमूहः भिन्नभावं चित्ररसाश्रयं बभूव । भिन्नत्वमेव विवृणोति । रामे साश्चर्यं सविस्मयं साद्भुतरसमिति सपटु सोत्साहं सवीररसमिति । "उत्साहात्मा भवेद्वीरः" । सव्यथं सविषादं सशान्तरसमिति विषादः संचारिको वा । मया सीतानीता यतो देवा अपि वलगन्ते अद्यापि सन्धिं करोमीति विषादः।तदुक्तं रसोदधौ।" विषादिष्टाद्यनवाप्तेः प्रारब्धासिद्धितोपराधाच्च । अनुतापोऽत्र विषादो विज्ञेयो मुक्तिसंबन्धः॥" साशङ्कं सविप्रलम्भशृङ्गारं शङ्कास्य संचारी । रामः सीतां मा गृह्णात्विति शङ्का । उक्तं च रसोदधौ।" स्वीयापराधचौर्यं कृतपरचौर्यादितो मता शङ्का । स्वानिष्टे क्षणयोगस्तदभयभावोऽत्र विश्लेषः॥" अत्र स्वानिष्टेक्षणं सविनयं सदैन्यं सकरुणमिति दैन्यं संचारी । हनूमदादिदर्शनोद्दीपिताक्षपुत्रवधाद्दैन्यं । साश्रुपूरं रसाद्रौद्ररसात्क्रोधस्थायी। क्रोधानुभवमश्रु तत्रैव लक्ष्मणदर्शने सति मेघनादे वत्सलरसो जातः । एतेन पुत्रो हत इति उद्दीपनं वात्सल्यात् अश्रूणि। अत्र रसद्वयं वक्त्रद्वये ज्ञेयम् ।सासूयं सहास्यरसं हास्येऽसूया संचारी सा च विभीषणगता।असूयातोऽपि हि हास्यं भवतीति प्रसिद्धम्।सभयं भयानकरसः भयं स्थायी सत्रपं सबीभत्सं त्रपात्रानुभावः । सा च या जुगुप्सातो भवतिजुगुप्सात्र स्थायी। एवमद्भुतवीरशान्तशृङ्गारकरुणरौद्रवत्सलहास्यभयानकबीभत्साः यथाक्रमं ज्ञेयाः ॥ १५ ॥

बद्ध्वा तूणान्दशोच्चैर्मघवहयसटावेणिबन्धेन वामै-
र्दोर्भिश्चापान्विधुन्वन्दश दश च शरान् दक्षिणैराददानः ।
क्ष्वेडन् क्रीडन् प्रकुप्यन् प्रसरदभिभवद्गर्जितातर्जितौघैः
शश्वत्खिद्यन्मुखश्रीरवतरति रणप्राङ्गणे राक्षसेन्द्रः १६ ॥

रामरावणयोः—

रणाङ्गणे कुण्डलिनो युवानः
परस्परं सायकभिन्नदेहाः ।
कुचाग्रलग्ना इव कामिनीनां
कुम्भाग्रलग्नाः सुषुपुर्गजानाम् ॥ १७ ॥

गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥ १८ ॥

तत्र सारो नाम राक्षसः—( तुमुलयुद्धे )

अश्वारूढस्तु यावद्व्रजति न शिबिरं वाजिनः पूर्वमर्द्धं
धावन्तं खण्डितस्य स्वमरिकुलबलात्पादयुग्मेन धीरः ।

---

बद्ध्वेति ॥ इन्द्राश्वकेशश्रेण्याम् उच्चैर्गाढं दश तूणान् निषङ्गान् बद्ध्वा वामैर्दशभिर्दोर्भिर्दश चापान् विधुन्वन् सन् दक्षिणैर्दशभिर्दोर्भिः दश शरानाददानः । दशमुखेषु पृथक् पृथग्भावं द्योतयति । अत्र रसः ग्रन्थगौरवात् नोद्घाटयते । कीदृक् राक्षसेन्द्रः क्ष्वेडन् हसन् । "क्ष्वेडामर्षगतं हास्यम्" इति धरणिः । द्वन्द्वः तच्च मुखं तेषां श्रीर्यस्य तच्चाधिकं दशधोक्तम् ॥ १६ ॥

रणेति ॥ कुचस्थानीयाः कुम्भाः ॥ १७ ॥ १८ ॥

अश्वेति ॥ यावत् क्रव्यादवीरः सारः खण्डितस्य मध्यतः कृत्तस्य वाजिनोऽश्वस्य पूर्वार्द्धमध्यारूढः अरिकुलबलात् शत्रुसैन्यात्सकाशात् शिबिरं स्वकटकं पादयुग्मेन खण्डिताश्वार्द्धप्रदेशे कृतस्तच्च-

सारः क्रव्याद्वीरः शिरसि करतलोत्थापितेनाङ्गदेन
क्रुद्धेनाताडितो द्राक् शिव शिव समरे पश्चिमार्द्धेन तावत्

अङ्गदः—

यावानब्धिः कलशशिशुना तावता किं च पीत-
स्तुल्याकारान्प्रहरति हरिः किं खगानद्रितुङ्गान् ।
तत्रागम्याः प्रथितवपुषः सन्तु तिग्मस्वभावा-
स्तेषां ग्रासग्रहणरभसं राम ते नामधेयम् ॥ २० ॥

---

रणयुगुलेन न व्रजति न गच्छति धावन्तम् अर्द्धं तावत् क्रुद्धेनाङ्गदेन द्राक् शीघ्रं समरे पश्चिमार्द्धेन कृत्वा शिरसि आताडितः । किंभूतेन पश्चिमार्द्धेनाङ्गदकरतलोत्थापितेन । शिव शिव कष्टम् ॥१९॥

महच्छरीराणि रक्षांस्यल्पशरीरान्वानरानवलोक्य जये विचिकित्समानं रामं बोधयति—यावानिति ॥ हे राम अब्धिर्यावान् मानतोऽगाधतायाश्च तावता तत्सदृशमानेन कलशशिशुना किं पीतः किंतु महानब्धिरल्पतरोऽगस्त्य इति च पुनः हरिरिन्द्रः तुल्याकारान् स्वल्पप्रमाणान् खगान् गिरीन् प्रहरति अपि तु स्वयमल्पः अद्रयस्तुङ्गाः । "पक्षिपर्वतयोः खगः" इति हैमी । तेषां सपक्षत्वात् । किंभूतान् खगान् अद्रितुङ्गान् सूर्यपर्यन्तोन्नतान् । "अद्रयो द्रुमशैलार्काः" इत्यमरः । तत्र तस्मिन् प्रस्तावे अगम्या गन्तुमशक्याः समुद्रादयः प्रथितवपुषः गिर्यादयः तिग्मस्वभावाः स्वभावतेजस्विनः अगस्त्येन्द्रादयोऽपि सन्तु भवन्तु तेषां सर्वेषां ग्रासग्रहणे कवलग्रहणादौ सरभसं सत्वरं राम ते नामधेयमस्तीति शेषः । रामोऽयमितिशब्देनैव ते नष्टा भविष्यन्ति किमत्राल्पदीर्घविचारणयेति भावः । कतिचित्पुस्तकेषु रावणवाक्यमिदम् । तत्पश्यामूनिति पाठः । तत्रायमर्थः । यावानब्धिस्तावानगस्त्येन पीतः तावता सर्वपानेन किं का नो हानिः यावता भवता तु बद्ध एव

रावणः—

स्त्रीमात्रं ननु ताटकामुनिसुतो रामः सविप्रः शुचि-
र्मारीचो मृग एव भीतिभवनं वाली पुनर्वानरः ।
भो काकुत्स्थ विकत्थसे वद रणे वीरस्त्वया को जितो
दोर्गर्वस्तु तथापि ते यदि पुनः कोदण्डमारोपय ॥२१॥

अङ्गदः—( अत्रान्तरे )

वन्द्यास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्ततां
सुन्दस्त्रीदमनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।

॥२२॥

इन्द्रोऽपि गिरीन्प्रहराति तेन गिरिप्रहरणेन किं का नो क्षतिर्मत्पुत्रेण बद्ध एव । तथा त्वयापि गिरिसमाः शौर्यादिहीनाः केचन राक्षसाः हताः तत्तस्मात्प्रथितं वपुर्येषां ते तिग्मस्वभावाः स्वभावतीक्ष्णाः मादृशाः राक्षसाः सन्तु तिष्ठन्तु। अमूनलपतरान् राक्षसान्पश्यसि हे राम तेषां तिग्मस्वभावानां ते नामधेयं त्वन्नाम्ना ख्यातं सैन्यं च ग्रासग्रहणाय रभसं शून्यं न किमपीत्यर्थः । "रभसः पदशून्ययोः" इति चरकः ॥ २० ॥

स्त्रीमात्रमिति ॥ विकत्थसे विकत्थनां करोषि अतो वद त्वया वीरः को जितः । अन्यत् सुबोधम् ॥ २१ ॥

वन्द्या इति ॥ हुमिति कोपेऽव्ययम् । हे रावण एते रामादयो वन्द्याः नमस्तुतियोग्या एव । कीदृशाः वर्त्ततां व्यवहर्तणां मध्ये विचारणीयचरिता न अत एव लोके महान्तस्ते प्रसिद्धाः । अवि-चारणीयत्वमेवाह । सुन्दस्त्री ताटका तद्दमनेऽपि अखण्डं यशो येषां ते स्त्रीवधादपकीर्तिबाहुल्यनियमात् अतस्ते तिष्ठन्तु।तद्वार्त्तया

रावणः—

शम्भोः पर्वतकन्दुकेन महती क्रीडा कृता येन तं
रे रे मानव राम मा स्मर भवं देवेश्वरं रावणम् ।
ज्याघोषं कुरु ताटकान्तमसुराणामन्तकं संयुगे
यश्चानीतिसमग्रधीरकुटिलः शाखामृगाणां पतिः ॥२३॥

( रामस्तथापि तं रावणं जघान । )

लज्जावनम्रवदनाम्बुजः सन्मनाक् स्थितः रावणः—

( विहस्य ) रे रे मानव राम ।

यो मया निहतो घोरे समरे तव पूर्वजः ।
अनरण्यः किमद्य त्वां व्यथयत्यथ लज्जितः ॥ २४ ॥

रामः—( निःशङ्कम् ) रे रे राक्षसाधम पश्य ।

न दूये नः पूर्वं नृपतिमनरण्यं यदवधी-
र्जयो वा मृत्युर्वा युधि भुजभृतां कः परिभवः ।

---

किं कृत्यं चेद्वीर्यमेव श्रोतुकामोऽसि तर्हि शृणु । यानि प्रसिद्धानि त्रीणि मुखानि त्रिशिरःशिरांसि च कुतः सकाशात्पराणि देहाद्भिन्नानि आसन् तत्त्वमेव वद । वालिहनने कियत्प्रावीण्यं तत्रापि जनः अर्थात्त्वमेवाभिज्ञोऽसि । वालिना त्वं बद्धः स तु रामेण हत इति भावः २२

शम्भोरिति ॥ भवं चेन्न स्मरसि । "आकृतौ भवमव्ययम्" इति विश्वः । तर्हि ज्याघोषं कुरु । अनीतौ समग्रां धियमीरयन्ति ये तेष्वपि कुटिलः अत्यनीतिवानिति शाखामृगाणां यः पतिर्वाली तस्याप्यन्तकं ज्याघोषं कुरु इत्यर्थो व्यङ्ग्यः ॥ २३ ॥

य इति ॥ सुबोधम् ॥ २४ ॥

न दूये इति ॥ कृपणं सदैन्यं यथा स्यात्तथा हैहयपतेः सका-

जितं मन्ये कारागृहविनिहतं हैहयपतेः
पुलस्त्यो यद्भिक्षामकृत कृपणं तद्व्यथयति ॥२५॥
यो रामो न जघान वक्षसि रणे तं रावणं सायकैः
स श्रेयो विदधातु वस्त्रिभुवनव्यापारचिन्तापरः ।
हृद्यस्य प्रतिवासरं वसति सा तस्यास्त्वहं राघवो
मय्यास्ते भुवनावली विलसिता द्वीपैः समं सप्तभिः२६॥
स प्रौढरावणरुषा विहितावलेपः
सज्जो बभूव दृढसंगरबद्धदीक्षः ।
आपन्नभीतिहरणं व्यवसायिनां हि
प्राणास्तृणं विपुलसत्त्वसहायभाजाम् ॥२७॥
तत्र रामो रतिं लेभे न प्रियाविरहार्दितः ।
तत्सत्यं मनसि स्वस्थे रम्याणां रमणीयता ॥ २८ ॥

---

शात् यत्पुलस्त्यस्त्वात्पतामहः यद्भिक्षामकृत तद्भिक्षाहरणं व्यथयतीत्यर्थः ॥ २५ ॥

य इति ॥ वक्षोनिषेधादन्याङ्गहननमायातं सा सीता सप्तद्वीपैः सप्तभिः पृथिव्याद्यावरणैः समम् । "द्वीपोऽस्त्रियामाचरणे पुंस्येवान्तर्जलावनौ । " इति जयन्तः । पुनः कीदृशी भुवनावली विलसिता विलीयते सर्वमस्मिन्निति विलं प्रकृतिस्तया सिता आवृता सप्रकृत्यावरणेत्यर्थः । " लीङ् विलापने " इत्यस्य विलामिति रूपम् । अन्यथा द्वीपानां त्रिभुवनान्तःपातित्वादानर्थक्यप्रसङ्गः स्यात् । एतद्धनने अकस्मान्महारणः स्यादिति भावः । अनेन विप्रलम्भोन्मादावस्था च दर्शिता इति भावः ॥ २६ ॥

स इति ॥ स रामः अवलेपो गर्वः सत्त्वमुत्साहः स एव सहायः तं भजन्तीति ॥ २७ ॥

तत्रेति ॥ सुबोधम् ॥ २८ ॥

त्राणोऽयं मम ताटकात्मशिरसि स्नातः स्वसुर्नासिका-
प्राणायामपरः खरत्रिशिरसां हुत्वा दशास्याहुतिम् ।
मारीचं च बलिं विधाय तदनु त्वाचम्य वारांनिधिं
भोक्तुं रावणमामिषं मृगयते भो दीयतां मैथिली ॥२९॥

रावणः—( तथापि सावज्ञम् )

क्लीबानामेव युद्धेषु प्राणत्राणाय राम धीः ।
लज्जाप्रशान्त्यै संसत्सु मूर्खाणामिव मूकता ॥ ३० ॥

( गगनमण्डलमवलोक्य )

रे काल त्वमकाललब्धविभवः स्वैरं सकामो भव
शंभोर्भूषय नूतनैः शिवशिरोमाल्यैर्निजाङ्गं मुहुः ।
किं च त्वं च विरिञ्चय संचिनु जगत्सर्गाय बीजं क्वचित्
सन्नद्धः करवालभीषणभुजो युद्धाय लङ्केश्वरः ॥ ३१ ॥

त्राण इति ॥ आत्मा रुधिरस्तद्युक्ते शिरसि । "देहे धातुषु कूट-स्थे जीवेऽप्यात्मा मतः पुमान् ।" इति विश्वः। धातुना रुधिरं गृह्यते । स्वसुस्त्वद्भगिन्याः शूर्पणखायाः साहचर्याद्दूषणोऽपि रावणस्येदं रावणं रावणस्यामिषमित्यर्थः ॥ २९ ॥

क्लीबेति ॥ हे राम रणेषु प्राणत्राणाय या धीः लज्जाप्रशान्त्यै संधये सा क्लीबानामेव । यथा विद्वत्सु लज्जाप्रशान्त्यै मौर्ख्याच्छादनाय मूर्खाणां मौनस्वीकारः तथा कातर्याच्छादनाय सन्धिरिति ३०

रे इति ॥ अनवसरप्राप्तैश्वर्यः एतस्याशेषहननमैश्वर्यम् । हे विरि-ञ्चय जगत्सर्गाय पुनः सृष्ट्यै बीजं संचिनु गोपाय । निःशेषेण नरान् हनिष्यामि इति भावः ॥ ३१ ॥

( राममाक्षिपति । )

अद्य वा जानकी राम कामं पास्यति मन्दिरे ।
रणे वा दारुणे गृध्रो मधुरानधरान्मम ॥ ३२ ॥

( तत्राशोकवनिकास्थितविमानमारुह्य जानकीं रामरावणयोर्युद्धं दर्शयति त्रिजटा सरमा च । मन्दोदर्यपि सुन्दरीपरिवृता लङ्काचलशिखरमारुह्य पश्यति । रुद्रोऽपि समुद्रमध्ये एकेन चरणेनोपस्थितो युद्धं पश्यति । देवाः सर्वे विमानाधिरूढाः नभोमण्डलगताः युद्धं पश्यन्ति स्म

रामः—( संहारभैरव इव क्रोधं नाटयति । )

रे रे निशाचरपते त्वरितं गृहाण
बाणासनं त्रिदशदर्पहरं शरं च ।
निर्वापयामि विरहाग्निममुं प्रियाया
मन्दोदरीतरलनेत्रजलप्रवाहैः ॥ ३३ ॥

( इति बाणान् स्पृशति । )

मन्दोदरी—( सभयम् )

उत्पाटयन् किमपि कौणपकोटिमन्त-
स्तेजोहुताशनसमिन्धनसामिधेनीम् ।

---

अद्येति॥प्रकरणं सुबोधम् । वागर्थः प्रतिपाद्यते । वा निश्चये । हे जानकि रामो यदि जीवति अद्य दारुणे रणे ममाधरान् कामं यथेच्छं गृध्रः पास्यतीति द्वितीयो मुहुरर्थे । कीदृशे रणे मन्दिरे वीरशरणे ३२

रे रे इति ॥ बाणासनं चापम् ॥ ३३ ॥

मन्दोदरीति ॥ हा कष्टमागतम् अनेन रामेण दशाननोऽपि स्फुटम् असंशयम् ईषज्जयः ईषत्कारो जयो यस्य । ईषज्जयत्वं द्योतयति । यदायं बालतरोऽतिशयबालकः बाणैस्ताटकामन्तर्हृदये

हस्ताढकीमकृत बालतरः पृषत्कै-
रीषज्जयः स्फुटमनेन दशाननोऽपि ॥ ३४ ॥

रामभुजदण्डः—

आकृष्टे युधि कार्मुके रघुपतेर्वामोऽब्रवीद्दक्षिणं
दानादानसुभोजनेषु पुरतो युक्तं किमित्थं तव।
वामान्यः पुनरब्रवीन्मम न भीः प्रष्टुं जगत्स्वामिनं
क्षेतुं रावणवक्त्रपङ्क्तिमिति यो दद्यात्स वो मङ्गलम् ३५॥

रामः—

कुशिकसुतसपर्यादृष्टदिव्यास्त्रमन्त्रो
भृगुपतिसहयोद्धा वीरभोगीनबाहुः ।

---

यस्तेजोभवोऽग्निस्तस्य समिन्धने सम्यगिन्धनादाने सामिधेनीम् एधःसमाहारको मन्त्रः सामिधेनी ताम् अकृत स्वतेजोग्निदीपनकर्त्रीम् । "एधोमन्त्रः सामिधेनी" इति शाश्वतः । कौणपा राक्षसास्तेषां कोटिमुत्पाटयन् सन् किमप्यनिर्वचनीयबलां रक्षःकोटिम् अद्यायं तरुण इति भावः ॥ ३४ ॥

आकृष्टे इति ॥ युधि धनुष्याकृष्टे सति रघुपतेः रामस्य वामः आयुधिहस्तः दक्षिणम् आयुधिहस्तम् अब्रवीत् इत्यन्वयः। "पाणावायुधिनद्धयोः" इति शब्दशेषे । आयुधानि धीयन्ते रेखाद्वारेणास्मिन्नित्यायुधि बद्धशृङ्खलेयं पद्यजातिः । "स्वरयोगवियोगाभ्यामर्थदा बद्धशृङ्खला ।" इति चित्तालङ्कृतौ । दानादानसुभोजनेषु त्वं पुरतः पुरोवर्ती अधुना इत्थं पृष्ठतो गमनं किं युक्तं वामान्यो दक्षिणहस्तः पुनर्वाममब्रवीत् । हे वाम रणे मम भीर्भयं न रावणवक्त्रपङ्क्तिं भेत्तुं प्रष्टुमागतोऽस्मीति शेषः । इति वदन् सः दक्षिणः वो मङ्गलं दद्यात् ॥ ३५ ॥

कुशिकेति ॥ तदा रामदेवः कौतुकी युद्धोत्सवी यात इति शेषः।

दिनकरकुलकेतुः कौतुकोत्तानचक्षु-
र्बहुमतरिपुकर्मा कौतुकी रामदेवः ॥ ३६ ॥
यद्रावणो बहुभिरेव भुजैः करोति
तद्राघवः प्रतिकरोति भुजद्वयेन ।
कर्मद्वयं यदपि तुल्यफलं तथापि
रक्षःपतेर्दशगुणं नरवीरतुल्यम् ॥ ३७ ॥

तत्र मन्दोदरी जानकी च—

रे रावणास्तमुपयातु सह त्वयार्कः
श्रीराघवे समरमूर्ध्नि कृतप्रतिज्ञे ।
मन्दोदरी जनकजास्तनगावलम्बि-
न्यर्के चकोरकवधूरिव चक्रवाकी ॥ ३८ ॥

रामः—

एकस्मिन्विनिपातितेऽपि शिरसि क्रोधोपशान्तिः कुतः
किं तु स्वानुनयाय मूर्धनि धनं दृष्टं न यत्रारिणा ।

---

वीराणां भोगाय योग्यौ बाहू यस्य सः यद्वा वीरो रमणीयो भोगीनो वासुकिस्तद्वद्बाहू यस्य बहुमतं रिपुभिः कर्म शौर्यं यस्य सः ॥ ३६ ॥ ३७ ॥

रे रावणेति ॥ अद्यैनं हनिष्यामि इति प्रतिज्ञा । अर्के अस्तनगावलम्बिनि मन्दोदरी जनकजा च अस्तशैलस्थेऽर्के च चकोरकवधूरिवासीत् । यथा चकोरी रात्रिमेवेच्छति चन्द्रकरामृतानुभवात् तथा च मन्दोदरी रात्रौ राक्षसानां बलातिशयात् । तथा सीता रात्रौ रक्षोतिशयात् रामप्रतिज्ञाभयादिति भावः ॥ ३८ ॥

एकस्मिन्निति ॥ स्वस्य च्छेत्तुः अनुनयाय मा च्छिन्धीत्यादिस्त-

त्वत्तो मूर्धबहुत्वतः फलमिदं सम्यङ्ङ् मया लभ्यते
छिन्नं छिन्नमवेक्ष्य राक्षसपतेः स्वं दुर्नयं ज्ञास्यसि॥३९॥

रावणः–( अत्यन्तद्रुततरश्रीरामबाणादिताडनव्यग्रः )

धनुर्निस्त्रिंशादिप्रहरणगलच्छेदकुपितो
दशास्यः स्वान्मूर्ध्नो रघुपतिशरव्रातदलितान् ।
करैरेकैरेकैर्नभसि भृशमादाय युगपत्
क्षिपन्नान्यैरन्यैश्चपलयति दोर्विंशतिमपि ॥ ४० ॥

रामः–( सावष्टम्भम् )

कल्पान्ते यत्कृतान्तैरिव वरसमरप्राङ्गणे रामचन्द्रो
बाणैरुत्तीर्णशाणैर्नवभिरपि दशग्रीवमूर्ध्नो नवैव ।
चिच्छेदालोक्य भूयः स पुनरपि नवान्विस्मितः सन्मुहूर्तं
विश्रम्यागस्त्यदत्तं तदनु रिपुवधायाददे ब्राह्ममस्त्रम् ४१

---

वाय यत्र शिरःकर्त्तने एकस्मिन्नेव शिरसि कृत्ते अन्यच्छिरस्तस्मिन् कृत्ते अन्यच्छिरोभावात् अनुभवाभावः छिन्नं छिन्नं मूर्धानम् ३९

धनुरिति ॥ एकैरेकैः करैः भृशं मूर्ध्नः अन्यैरन्यैः करैर्भृशं नभसि विक्षिपन् मन् युगपदेव विंशतिं चपलयाति ॥ ४० ॥

कल्पान्त इति ॥ रामः रणे नवभिर्बाणैर्नव एव रावणस्य मस्तकान् चकर्त्त । बाणसाफल्ये विशेषणद्वयं भूयः कर्त्तनानन्तरं स रामः पुनः अभिनवान् नवीभूतानालोक्य विस्मितः सन् मुहूर्त्तं विश्रम्यागस्त्यदत्तं ब्रह्मास्त्रम् आददे गृहीतवान् । अत्रेयं कथा । ब्रह्मणास्य वरो दत्तो यावद्दशमो मध्यस्थो मूर्धा न विच्छिन्नस्तावदन्यानि शिरांसि कृत्तान्यपि अकृत्तानि भविष्यन्ति इति ॥४१॥

पैतामहं रघुपतिः समरेऽतिकोपा-
द्बाणं मुमोच हृदये दशकन्धरस्य ।
भित्त्वा स तद्धृदयशोणितशोणगात्रः
प्राणान्विवेश धरणीतलमस्य नीत्वा ॥ ४२ ॥

मन्दोदरी–(सकलसुन्दरसुन्दरीभिः परिवृता गलदविरलनेत्रजलप्रवाहैः सीतापतेर्विरहानलेन सह लङ्कापतेः प्रतापानलं निर्वापयन्ती हाहाकारं घोरस्फूत्कारैः कुर्वन्ती झटिति त्रिकूटाचलादुत्पत्य समरभूमौ महानिद्रां गतस्य निजप्राणनाथस्य लङ्कापतेश्चरणकमलयोर्निपत्य )

भिन्नैरावतबन्धुसिन्धुरशिरःसम्पातिभिर्मौक्तिकैः
शश्वद्विश्वजयप्रशस्तिरचनावर्णावलीशिल्पिने ।
नाकान्तःपुरिकाकपोलविलसत्काश्मीरपत्राङ्कुर-
श्रीविन्यासविनाशभीषणभुजस्तम्भाय तुभ्यं नमः ४३॥

पैतामहमिति ॥ पैतामहं ब्रह्मास्त्रं सः बाणः तत् हृदयं भित्त्वा अस्य रावणस्य प्राणान्नीत्वा भुवि विवेश इत्यन्वयः ॥ ४२ ॥

सुगमं गद्यम् । भिन्नैरिति ॥ अथ विप्रलम्भगुणकीर्तनमाविष्करोति । हे प्रिय तुभ्यं नमः । किंभूताय भिन्नानि यानीन्द्रगजबन्धूनां सिन्धुराणां गजानां शिरांसि तेभ्यः संपतितुं शीलं येषां तैः मौक्तिकैः कृत्वा शश्वत् या विजयप्रशस्तिरचना लिखनं तद्युक्ता या वर्णावली तस्याः शिल्पिने लेखकाय गजकुम्भच्युतमुक्ताहारैरेवात्मजयप्रशस्तिं विलिखतीत्यर्थः । नाकान्तःपुरिकानां स्वर्गान्तःपुरस्थमृगदृशां कपोलेषु विलसन् कुङ्कुमपत्रस्याङ्कुरचित्रं तत्र यः

हा प्राणेश लङ्केश ।

भूयिष्ठानि मुखानि चुम्बति भुजैर्भूयोभिरालिङ्ग्यते
चारित्रव्रतदेवताऽपि भवता कान्तेन मन्दोदरी ।
हा लम्बोदरकुम्भमौक्तिकमणिस्तोमैर्ममैकावली
शिल्पे वागधमर्णिकस्य भवतो लङ्केन्द्र निद्रारसः॥४४॥
एकेनैकसमुद्धृतो हरगिरिर्द्वाभ्यां त्रिलोकी जिता
यस्याष्टादशभिर्भुजैरवसरः शस्त्रस्य नासादितः ।
सोऽप्येनं द्विभुजं मनुष्यमहह क्रव्यादवीरो रिपुं
प्राप्य व्यर्थभुजो रणे विनिहतो दैवाय तस्मै नमः॥४५॥

---

श्रीविन्यासः शोभातिशयः तस्य विनाशाय भीषणः भुजस्तम्भो ऽस्य ॥ ४३ ॥

भूयिष्ठानीति ॥ मन्दोदरी ते भूयिष्ठानि बहूनि मुखानि चुम्बति कान्तेन भवतास्य विनाशाय ताभिर्भूयोभिर्बहुभिर्भुजैरालिङ्ग्यते इत्यन्वयः । पतिव्रता देवी हे लङ्केन्द्र भवतोऽपि निद्रारसो यातः । हा कष्टम् । ऋणिनो निद्रारसाभावात् । ऋणमेव द्योतयति । लम्बोदरः गजाननो गणेशस्तस्य कुम्भयोः ये मौक्तिकसमूहास्तैर्मम या एकावली हारभेदः । " एकावल्येकयष्टिका " इत्यमरः । तस्याः शिल्पे विनिर्माणे वाचा अधमर्णिकस्यास्य लम्बोदरं विभिद्य तव हारं करिष्यामीति वा । " उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् । " इत्यमरः ॥ ४४ ॥

एकेनेति॥अथास्य बलं द्योतयति । दैवं प्रणमति । यस्य रावणस्य द्वाभ्यां भुजाभ्यां त्रिलोकी विजिता वशीकृता तयोरेकेन एष हरगिरिः समुद्धृतः। एकेनान्ये लोका जिता इति द्रष्टव्यम्। सोऽपि रावणः एनं रामं प्राप्य व्यर्थभुजः सन् येन दैवेन विनिहतस्तस्मै दैवाय नम इति ॥ ४५ ॥

जातिर्ब्रह्मकुलेऽग्रजो धनपतिर्यः कुम्भकर्णोऽनुजः
पुत्रः शक्रजयी स्वयं दशशिराः पूर्णा भुजाविंशतिः ।
दैत्याः कामचरा रथश्च विजयी पारे समुद्रं गृहं
सर्वं निष्फलितं तथैव विधिना दैवे बले दुर्बले ॥ ४६ ॥

कालेन विश्वविजयी दशकन्धरोभू-
द्दुर्गाचलोद्धरणचञ्चलकुण्डलाग्रः ।
संस्कारमग्निदहनाय स एष काल-
श्चाज्ञां विना रघुपतेः प्लवगैर्निरुद्धः ॥ ४७ ॥

दुर्गं त्रिकूटः परिखा समुद्रो
रक्षांसि योधा धनदश्च वित्तम् ।
संजीविनी यस्य मुखाग्रविद्या
स रावणः कालवशाद्विनष्टः ॥ ४८ ॥

इह खलु विषमः पुराकृतानां
भवति हि जन्तुषु कर्मणां विपाकः ।
शिवशिरसि शिरांसि यानि रेजुः
शिव शिव तानि लुठन्ति गृध्रपादैः ॥ ४९ ॥

(ततो लक्ष्मणवायुपुत्रौ विमाने जानकीमारोप्य सत्वर-मानीतवन्तौ ।)

जातिरिति ॥ क्षेपकः ॥ ४६ ॥ ४७ ॥

कालस्य सर्वतो दुर्निवारत्वं द्योतयति—दुर्गमित्यादिपञ्चभिः पद्यैः ॥ ४८ ॥

इहेति ॥ शिव शिवेति कष्टं कष्टं तानि शिरांसि लुठन्ति चञ्चाक्षेपेणेतस्ततश्चालयन्ति रेजुः विलसन्ति स्म आविर्भवन्ति ॥ ४९ ॥

( जानकीससंभ्रममुत्थाय लज्जां नाटयति । )

रामः—

जनकतनयां हृत्वा रागी हते दशकन्धरे
तदनु विरहज्वालाजालाकुलीकृतविग्रहः ।
रघुपरिवृढो नाधो नोर्ध्वं न तिर्यगवेक्षते
मुकुलितदृगम्भोजद्वन्द्वः समाहितवत्स्थितः ॥ ९० ॥

हनूमान्—(साधु स्ववंश्यपरिजनलज्जया च)मातर्जानकि ।

चापालिङ्गनभङ्गुराङ्गमदनन्यस्तैकहस्ताम्बुजं
मध्ये मुष्टिनिविष्टपञ्चकशरं बिभ्राणमन्यत्करे ।
वीर श्रीनखरक्षतैरिव नवैर्बाणव्रणैरङ्कितं
वीरं राममवस्थितं प्रणमत प्रोन्मथ्य लङ्काभटम् ॥९१॥

जानकी—( स्वगतम् )

तापच्छेदसुधाकरस्तनुभृतां क्रोधानलाम्भोधरः
सारासारविवेकशोकभवनं हर्षस्य बीजाश्रयः ।

जनकतनयामिति॥रागी युद्धोत्साहवान् रामो जनकतनयां हृत्वा लङ्कातः स्वशिबिरे आनीय । यद्वा यो जनकतनयां हृत्वा रागी रागवान्यतः एवंभूते दशकन्धरे हते सति । सर्वं सुबोधम् ॥ ९० ॥

चापेति ॥ चापालिङ्गनेन भङ्गुरं यदङ्गं तेन मदनमिव अन्यत्करे द्वितीयहस्ते मुष्टेर्मध्ये मध्येमुष्टि निविष्टो यः पञ्चकशरः शरपञ्चकस्तं बिभ्राणम् । यद्वा । पञ्चकं पञ्चात्मकं रावणदेहं तद्धन्ता शरः पञ्चकशरः वीरश्रीर्विजयलक्ष्मीस्तस्या नखक्षतैरिव तमिति प्रसिद्धम् ॥९१॥

कालेति । बीजमाश्रयभूतम् अन्यथाङ्कुरजातेर्बीजवदनुपलब्धिप्र-

कालव्यालविषस्य गारुडमणिर्धैर्यद्रुमो रामभूः
कैवल्यप्रतिभूर्घटेत सुकृतै रामस्य सत्सङ्गमः॥८२॥

( इति रघुपतेश्चरणकमलयोः शिरोमधुकरेण मकरन्दमनुभवितुमिच्छति । )

रामः—( उपसृत्य साशङ्कम् ) हे महान्तो जनाः यद्यपि प्रिया पतिव्रता तथापि चिरं परमन्दिरस्था दिव्यमन्तरेण कथं मां स्प्रष्टुमर्हति ?

( इत्याकर्ण्य रामवाक्यादाकाशादवतरन्ति स्म ब्रह्मादयः । ततो दिव्योपकरणं नाटयति । )

तत्र रामो रतिं लेभे न प्रियाविरहार्दितः ।
यत्सत्यं मनसि स्वच्छे रम्याणां रमणीयता ॥८३॥

जानकी—(सत्वरं ज्वलत्पावकमुपगम्य)भो भगवन् पावक।

मनसि वचसि काये जागरे स्वप्नमार्गे
यदि मम पतिभावो राघवादन्यपुंसि ।
दह ममाङ्गं पावकं पावक त्वं
सुललितफलभाजां त्वं हि कर्मैकसाक्षी ॥ ८४ ॥

( इति ज्वलत्तीव्रदहनान्तराले देहं चिक्षेप । )

---

सङ्गः स्यात् मोक्षजनयिता मोक्षद इति सुबोधम् ॥ ८२ ॥

ननु चिराभीष्टप्राप्तौ कथमस्य धैर्यमित्यत आह—तत्रेति॥रामस्तत्र तस्यां सीतायां रतिं यत् लेभे तत्सत्यमेव । नन्वानन्दुश्चेत्प्रियाविरहार्दितोऽपि न तु तदसौन्दर्यादिति चेन्न। रम्याणां वस्तूनां रमणीयता तदनुभावः स्वस्थे मनसि भवति नतु व्यग्रे । अतो रामसीतादिव्यग्रहणादिना व्यग्रत्वम् । सुबोधम् ॥ ८३ ॥

सुबोधम् ॥ ८४ ॥

अथ वानरभटाः -

सत्यं कालहुताशनस्य वहतो जिह्वातिलीलासर-
स्यङ्गारे सरसीरुहं कमलभूरालोक्य सीताननम्।
शुद्धेयं जनकात्मजेत्यभिदधौ तावत्तु कीशेश्वरैः
फूत्फूत्काररवैरपूरि रभसा तावन्नभोमण्डलम् ॥५५॥

श्रीरामः—( सानन्दम् )

वह्निं गताया जनकात्मजायाः
प्रोत्फुल्लराजीवमुखं विलोक्य ।
उवाच रामः किमहो सुरादी-
नङ्गारमध्ये जलजं विभाति ॥ ५६ ॥

जानकी—( सानन्दम् )

श्रीरामो दयिताविनोदविपुलप्रीतिप्रभूतीभव-
त्प्रस्वेदाम्बुकणावृतास्यकमले दिव्योत्थिता जानकी ।

---

सत्यमिति ॥ कमलभूः ब्रह्मा हुताशस्य जिह्वा ज्वालास्तासां पङ्क्तय एव लीलासरः क्रीडार्थं सरसि तस्मिन् सीताननमेव सरसीरुहमालोक्य इयं सीता शुद्धा इत्यावेदयन् अवददेव तावत् कीशेश्वरैः सुग्रीवादिभिः फूत्फूत्कारशब्दैर्नभोमण्डलं रभसा त्वरया अपूरि पूरितम् । कीदृशस्य कालहुताशनस्य सत्यं यथार्थं शुद्धाशुद्धनिर्णयं वहतः ज्ञापयतः । किंभूते जिह्वालीलासरसि अङ्गारे अङ्गारप्रचुरे । अत्रैवार्थे वाशब्दः । अनुव्यवधानात्कथमडागमः । अत्रोक्तं कविकामधेनौ । "धावतः शब्दप्रत्ययेऽपि उपसर्गाः धातुसंज्ञाः स्युः" । धातुत्वादडागमः । "कीशोऽस्त्री वानरे भिक्षौ" इति विश्वः । सुबोधम् ॥ ५५ ॥ ५६ ॥

श्रीराम इति ॥ सीताया विनोदार्थं या प्रीतिस्तया बहुतरं भवत् यत् प्रस्वेदाम्बुकणालङ्कृतम् आस्यकमलं यस्य एवंभूते रामे सति

आगम्याशु ससंभ्रमं बहुतरां भक्तिं दधाना पुन-
स्तत्पादौ मणिकङ्कणोज्ज्वलकरा नैव स्पृशत्यद्भुतम् ५७

( अहल्यावच्चरणस्पर्शमात्रेण कङ्कणमणयोऽपि योषितो माभूवन्निति भावः । )

सुग्रीवः—( रामं विज्ञापयति ) देव ।

इयमियं त्वयि दानवनन्दिनी
त्रिदशनाथजितः प्रसवस्थली ।
किमपरं दशकन्धरगेहिनी
त्वयि करोति करद्वययोजनम् ॥ ५८ ॥

रामः—( नम्राननो भूत्वा ) किमाज्ञापयति महाभागा ।

मन्दोदरी—

धन्या राम त्वया माता धन्यो राम त्वया पिता ।
धन्यो राम त्वया वंशः परदारान्न पश्यसि ॥ ५९ ॥

साधु राम साधु अतः परं मम का गतिः ?

रामः—महाभागे न खलु राक्षसीनां सहगमने धर्मः । अतस्त्वया बिभीषणालयमास्थाय लङ्काचले राज्यं चिराय भुज्यतामिति ।

---

स्वयमपि दिव्यादग्निशपथात् उत्थिता ससम्भ्रमं सादरमपि शीघ्र-मागम्य तत्रापि दृढभक्तिवती सती रामपादौ न स्पृशति अद्भुतमि-त्यर्थे एवप्रयोगः। अस्पर्शे हेतुं द्योतयति मणिकङ्कणोज्ज्वलकरेति ५७॥

अथास्याः पितृपुत्रपतितो महत्त्वं द्योतयति—इयमियामिति॥ इय-मियामित्यादरे वीप्सा । त्वयि निमित्तम् अपरं करद्वययोजनादन्यत् किन्न किमपि ॥ ५८ ॥ ५९ ॥

( विभीषणं लङ्काधिपत्याभिषेकं नाटयति । )

रामः—( ततो आत्मानं पुष्पकविमाने जानकीं चारोप्य रणभूमिं दर्शयति । ) प्रिये जानकि पश्य ।

अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवेद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥६०॥
हन्तीति ज्वलितः कृशः कपिरपि व्रीडावनम्राननो
लीलालङ्घितवाहिनीपतिरिति श्लाघाचलत्कन्धरः ।
रामस्यायमितीर्ष्यया कलुषितः पश्यन्प्रिये त्वत्कृते
विक्रामत्यनिलात्मजे दशमुखः कां कामवस्थां गतः ६१

जानकी—( सविस्मयम् ) भोः प्राणनाथ तथावि-धाद्वनान्तात्कथमिहागतः ।

रामः—( सहर्षम् ) प्रिये जानकि ।

निवासः कान्तारे प्रियजनवियोगाधिरधिको
धनुर्मात्रत्राणं रिपुरपि धुरीणः पलभुजाम् ।

अत्रेति ॥ नागपाशबन्धनं रावणशक्त्या अर्थान्ममेति ॥ ६० ॥

अथ हनूमदुपक्रान्तिं श्रावयन् रावणभयमाह—हन्तीति ॥ प्रहरन्तीति ज्वलितः कृशोऽल्पनरः कपिरिति श्रुत्वा व्रीडयावनम्राननं यस्य वाहिनीपतिः समुद्रः । ' नदिनीवाहिनीसिन्धुः " इति हलायुधः । सर्वं सुबोधम् ॥ ६१ ॥

हनूमदुपक्रान्तिमुक्त्वा सुग्रीवोपक्रान्तिं कथयन्नात्मनः कृतज्ञतामाविष्करोति—निवास इति ॥ कान्तारे अतिदुर्गमे एतेनान्यजनसङ्गमोऽ-

अकूपारंपारे वसति च स कात्र प्रतिकृति-
र्न मित्रं सुग्रीवो यदि तदियती राघवकथा ॥ ६२ ॥

( अत्रान्तरे चन्द्रोदयः बभूव । )

रामः—देवि ।

पश्योदेति वियोगिनो दिनमणिः शृङ्गारदीक्षामणिः
प्रौढानङ्गभुजङ्गमस्तकमणिश्चण्डीशचूडामणिः ।
तारामौक्तिकहारनायकमणिः कन्दर्पसीमन्तिनी
काञ्चीमध्यमणिश्चकोरतरुणी चिन्तामणिश्चन्द्रमाः ६३॥

रामः—

प्राचीनस्मृतविरहव्यथातिभीतः
काकुत्स्थः कृतकुतुकाक्षिमीलुलीलः ।

---

पि निरस्तः । तद्वियोगमनोव्यथायासः पलभुजां मांसाशिनां धुरी-णः अनेन मनुष्यभक्ष्यत्वमुक्तम् । स च रिपुः पुनः अकूपारंपारे समुद्रपारे वसति एतन्निपातनम् अत्रैतादृश्यवस्थायां का प्रतिकृति-कः प्रतीकारः परंतु यदि सुग्रीवो मित्रं न स्यात् तदा राघवस्य मम कथा एतावती वनस्थो रामस्तद्भार्या रावणेन हृतेति ॥ ६२ ॥

पश्येति ॥ हे प्रिये पश्य चन्द्रमा उदेति यं दृष्ट्वा सर्वः प्रफुल्लति तथा कामश्चेति हरशिरोभूषणं कलारूपेण । एतेनात्र रुद्रयोगादेव वियोगिदाहकत्वमुक्तम् । तारा एव मौक्तिकानि तेषां हारस्य म-ध्यमुख्यरत्नं रतिकाञ्च्या मध्यमणिः एतेनास्य दर्शनात् कामकेलौ रत्यतिशयो द्योतितः । चिन्तामणित्वेन संयोगिनीनां केलिप्रदीप-कत्वमुक्तम् ॥ ६३ ॥

प्राचीनेति ॥ रामः प्रेयस्याः लोचने कराभ्यां स्थगयति आच्छा-दयति । नेत्राच्छादने हेतुमाह । संपूर्णे शशिनि चिरं लग्ना दृष्टिय

संपूर्णे शशिनि चिराय लग्नदृष्टेः
प्रेयस्याः स्थगयति लोचने कराभ्याम् ॥ ६४ ॥

( अत्र रात्रौ सुखसुप्ताः सर्वे यथास्थानं प्रातरागत्य )

विभीषणः—( रामपादौ प्रणम्य ) देव ।

किं कुर्वाणपयोधिसेवितगृहोद्याना मुदे सर्वतो
लङ्केयं रघुवंशविक्रमकथाबीजप्ररोहस्थली ।
देवेनात्र दशाननस्य दशभिश्छिन्नैः शिरोभिः क्रमा-
देकैकेन शतं शतं शतमखस्यामोदिता दृष्टयः ॥ ६५ ॥

( रामस्ततस्तत्कालयोग्योपकरणैश्छत्रचामरादिभिर्वि-

---

स्याः । आत्मन्याच्छादकत्वहेतुमाह । प्राचीना पूर्वकालीना स्मृता या मृगनिदाना विरहव्यथा तया भीतः। आच्छादने वैदग्ध्यमाह । कृता कुतुकार्थं निलयनज्ञानार्थम् अक्षिनिमीलनस्य लीला क्रीडनं येन सः कनकमृगवन्मृगाङ्कमृगमपि याचयिष्यतीति भावः ॥ ६४ ॥

किमिति ॥ अत्र लोकरीत्या सुखाभावः रामगुणस्मरणात् । सुखं द्योतयन्नाह । हे रघुवंश इयं लङ्का किं सुखाय न कस्मैचिदिति । किमाक्षेपे अल्पसुखायेयम् । कीदृक् लङ्का सर्वतः उपकुर्वाणो यः पयोधिस्तेन सेवितानि गृहोद्यानानि यस्यां सा । "नानोपकारगम्भीरः कुर्वाणो नापरः सुखी ।" इति शाश्वतः । अत्रापि रत्नासनदुर्गविधायित्वनानाजनसेवनादिनोपकारता अथानिच्छां द्योतयति । यत्र देवेन भवता रावणस्य च्छिन्नैर्दशभिः शिरोभिः क्रमादेकेन शिरसा इन्द्रस्य शतं शतं दृष्टयः मोदिताः सुखिनः कृताः सहस्रनयनत्वात् अत्रेच्छायां माशब्दः। "कोपेच्छयोर्मा इष्टः स्यात्" इति हैमी । रघुवंशशब्दोऽत्रापि रघुवंशस्य या विक्रमकथा सैव बीजं तस्योत्पादकं स्थलं यस्यां सा ॥ ६५ ॥

भीषणं संभाव्य पुनरयोध्यां राज्यभोगाय प्रस्थितः। )

तत्र सुग्रीवः—देव ।

वाजिव्रातखुरप्रहारदलितक्षोणीरजोभिर्युतः
सान्द्रैर्जीर्णकपोतकण्ठरुचिभिर्व्योमेदमास्तीर्यते ।
किंचानेककरीन्द्रगण्डविलसद्दानाम्बुधाराघनं
संग्रामं प्रथयन्त्यमी परिमलप्रोद्गारिमन्दानिलाः ॥ ६६ ॥

जानकी—(ततः समुद्रे सेतुमासाद्य) भो प्राणनाथार्यपुत्र।

दृष्टोऽयं सरितां पतिः प्रियतमः क्वास्ते स सेतुः परं
क्वेति क्वेति मुहुर्मुहुः सकुतुकं पृष्टे परं विस्मिते ।
अत्रासीदयमत्र नात्र किमिति व्यग्रे निजप्रेयसि
व्यावृत्तास्यसुधानिधिः समभवन्मन्दस्मिता जानकी ६७

( मुखदर्शनक्षुब्धजलधिकल्लोलैराच्छादितस्य सेतोः प्रकटनाय मुखव्यावृत्तिरिति भावः । )

---

वाजीति ॥ हे राम वाजिव्राताः अश्वसमूहास्तेषां खुरप्रहारेण दलिता चूर्णीकृता या क्षोणी तस्या रजोभिरिदमग्रतो दृश्यं व्योम आच्छाद्यते । किंभूतैः वृद्धकपोतकण्ठस्येव रुचिर्येषां तैः किंचान्यदपि अमी परिमलवाहिनो मन्दवायवः संग्रामं प्रथयन्ति सर्वतः कथयन्ति परिमलप्रापकत्वात् । किंभूतं संग्रामम् अनेके ये करीन्द्राः गजास्तेषां गण्डेभ्यः सकाशात् विगलन्ति च तानि दानानि च मदजलानि तेषां धाराभिर्घन इव सवर्षं घनं पङ्किलं वा रेणुं मदैक्यात् एतत्कटगन्धेन सर्वतोऽद्यापि रणस्य तात्कालिकत्वमिति भावः ६६

दृष्ट इति ॥ सकौतुकं स्वयं पृष्टे रामे परं विस्मिते सति व्यावृत्तं समुद्रदर्शनान्निवर्तितं मुखमेव चन्द्रो यस्याः सा ॥ ६७ ॥

स्नात्वा पीत्वा दरीभिर्जलधिमथ चिराद्दृष्टमैनाकबन्धु-
प्रीतिप्रौढाश्रुपूरद्विगुणमहिमभिर्निर्झराः पूरयन्तः ।
ये विन्यस्ताः पुरस्तान्निशि निशि निवहैरोषधीनां ज्वलद्भि
स्ते दृश्यंते तदंभःस्थितकपिशिबिरस्मारिणः सेतुशैलाः
यदा दूरापातित्रिदशयुवतीनेत्रसुलभा-
मपां भर्ता हारावलिवलयलक्ष्मीं वितनुते ।
तदायं माणिक्यस्फटिककनकग्रावशिखरै-
रशून्यात्मा सेतुर्विभवति महानाटक इव ॥ ६९ ॥
जगाम रामः सह सीतया स्वां
पुरीमयोध्यां सह वानरेन्द्रैः ।

---

रामोऽब्धिं दर्शयति—स्नात्वेति ॥ ते सेतुशैलाः समुद्रवेला गिरयः पुरस्ताद्दृश्यन्ते । किंभूताः निशि ज्वलद्भिः ओषधीनां निवहैः तदम्भःस्थिताः समुद्रजलस्थायिनः कपीनां शिबिराः अवमोचनास्तान् स्मारयितुं शीलं येषां ते के ये विन्यस्ताः सेतुबन्धनार्थम् । कीदृशाः दरीभिः जलधिं स्नात्वा पीत्वा निर्झराः प्रस्रवणान् पूरयन्तः " आपोऽस्त्री निर्झराद्वयोः " इति धरणिः । कीदृशीभिर्दरीभिः चिराद्दृष्टो यः मैनाक एव बन्धुस्तस्मिन्या प्रीतिस्तया प्रौढा ये अश्रवस्तैर्द्विगुणो महिमा यासां ताः । यद्वा । दरीभिर्जलधिं पूरयन्त इति योज्यम् । पूरणे हेतुः चिराद्दृष्टेति । किंभूताः सेतुशैलाः निर्झराः प्रस्राविणः ॥ ६८ ॥

यदेति ॥ अयमपां भर्त्ता समुद्रः हारावल्याः वलयस्य च लक्ष्मीं वितनुते विस्तारयति । अत्र हेतुमाह । दूरादापतितुं शीलं येषाम् एवंभूतानि त्रिदशयुवतीनां नेत्राणि तेभ्यः सकाशात्सुलभां सुखेन लब्धुं योग्याम् अयमर्थः । यदा मण्डलीकृतश्रेणीभूतदेवास्त्रियः केनापि कौतुकेन एनं पश्यन्ति तदा स्त्रीपङ्क्तिरेव हारावली तत्र

प्रत्यागतैस्तैर्भरतादिभिश्च
राज्येऽभिषिक्तो मुनिभिश्चिराय ॥ ७० ॥

हित्वैकां हरशेखरप्रणयिनीपीयूषभानोः कलां
दिक्पालावलिमौलिभूषणमणीन् गृह्णीत सर्वानपि ।
तैः काञ्ची रचिता चिराय बहुशः श्रोणीतटे जानकी
गायन्ती निजमञ्जुसिञ्जितगिरा त्वद्विक्रमाडम्बरम् ७१॥

अङ्गदः—( अकस्माद्वानरभटेभ्यः समुत्पत्य पितृहन्तारमवलोक्य क्रोधं नाटयति । दोस्तम्भास्फालकेलिमभिनीय )

रामचन्द्र त्वयादिष्टं यद्यत्तत्तन्मया कृतम् ।

ये रश्मयः वलयानि तदन्तःपातिमण्डलानि यदेतां लक्ष्मीं वितनुते तदास्य सेतुर्महानाटक इव महन्नृत्यमिव भवति । सेतौ हेतुमाह। माणिक्याश्च स्फटिकाश्च कनकग्रावाणश्च तद्युक्तैः शिखरैः अशून्यात्मा निर्मितशरीरः माणिक्यादिषु देवस्त्रीप्रतिबिम्बाक्षेपत्वेन नृत्यमिव दृश्यत इति भावः । महानाटकोऽपि ईदृक् भवति महानाटकः हारेण वलयेन च लक्ष्मीं वितनुते । "बह्वङ्गनाबद्धबाहुप्रेक्षणं हारको मतः। तदन्तरालपङ्क्तिस्थविक्रियावलयं भवेत्॥" इति सङ्गीतमुक्तावल्याम्। दूरादापातीत्यादिपूर्ववत्। पुनः किंभूतो नाटकः "माणिक्यं यः स्मृतैर्भावः कटाक्षैः स्फाटिको मतः। अङ्गहारत्वसंजातो हेमजन्मा चतुर्विधः ॥" इत्यपि सङ्गीते । एतेषां ग्रावाः अभिनयनानि तेषां शिखरैराधिक्यैः अशून्यात्मा पूर्णः। "ग्रावोऽभिनयनं हारः" इति धनंजयः । पुनः किंभूतः सेतुः तत्प्रमाणबद्धः क इव अपां भर्त्तेव एवमुभयथा वर्णनीयं मयैव व्याख्यातम् । अन्यदप्यूह्यमप्रसन्नैः ॥ ६९ ॥ ७० ॥ ७१ ॥

रामेति ॥ यद्यदित्याधिकं यत इति यदि त्रैलोक्यनाथोऽसि त-

यतस्त्रैलोक्यनाथोऽसि न च त्याज्यं गुरोर्वचः ॥ ७२ ॥

पश्य श्रीरामचन्द्र त्वदभिमतमहो लक्ष्मणेनापि पूर्णे
तूर्णं रङ्गावतारेऽवतरतु स भवानाहतो येन तातः ।
सुग्रीवेणाञ्जनेयप्रमुखभटचमूचक्रवालेन सार्द्धं
त्वामेकेनाङ्गदोऽहं पितृनिधनमनुस्मृत्य मथ्नामि दोष्णा॥

श्रुत्वाङ्गदस्य महतीं समरप्रतिज्ञां
ते चुक्षुभुः कपिचमूपतयः सरामाः ।
सौमित्रिरप्यनपराधिनमाहतं तं
मत्वा कृताञ्जलिपुटः पुरतो बभूव ॥ ७४ ॥

तदा च ।

आकाशवाण्यभवदेवमहो स वाली
दाशो हनिष्यति पुनर्मथुरावतारे ।
श्रुत्वा विलोक्य रघुनन्दनवानराणां
कारुण्यमञ्जलिपुटं स रणान्निवृत्तः ॥ ७५ ॥

थापि गुरोर्वालिनः वचः वैरं न त्याज्यम् । "वैरं वाचो वचो नित्यम्" इति विश्वः ॥ ७२ ॥

पश्येति ॥ त्वदभिमतं त्वयानुमानितं सैन्यं स भवानपि रङ्गावतारे अवतरतु । येन त्वया तातो हतः पितृनिधनं नाशम् अनुस्मृत्य एकेन दोष्णा सुग्रीवादिभिः सार्द्धं मथ्नामि ॥ ७३ ॥

श्रुत्वेति ॥ सकरुणः रामः लक्ष्मणोऽपि तं वालिनं निरपराधिनमाहतं मत्वा पुरतोऽङ्गदाग्रे कृताञ्जलिपुटो बभूव ॥ ७४ ॥

आकाशेति ॥ एवं रामं मथुरावतारे कृष्णरूपिणं वाल्येव दाशः व्याधरूपधारी "कैवर्त्ते दाशधीवरौ" इत्यमरः । इति वाणीं

अङ्गदः—(पितृवधप्रतीकारो भविष्यतीति सानन्दं कोप-मपहाय शान्तिमेत्य रामं स्तौति ) देव ।

अकर्णमकरोच्छेषं विधिर्ब्रह्माण्डभङ्गधीः ।
गुणानाकर्ण्य रामस्य शिरःकम्पभयादिव ॥ ७६ ॥

हनूमान्—

कूर्मः पादोऽङ्गयष्टिर्भुजगपतिरसौ भाजनं भूतधात्री
तैलापूराः समुद्राः कनकगिरिरयं वृत्तवर्त्तिप्ररोहः ।
अर्चिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना
शत्रुश्रेणीपतङ्गो ज्वलति रघुपते त्वत्प्रतापप्रदीपः॥७७॥
कैलासो निलयस्तुषारशिखरी विन्दिर्गिरीशः सखा
स्वर्गङ्गा गृहदीर्घिका हिमरुचिश्चन्द्रोपलो दर्पणः ।

---

श्रुत्वा रघुनन्दनस्य तथा वानराणां च कारुण्यं यथा स्यात्तथाऽञ्जलिपुटमवलोक्य रणान्निवृत्त इति ॥ ७५ ॥

अकर्णमिति ॥ एतेन गुणानां मनोहारित्वमुक्तम् । कम्पोऽत्र सात्विकः । यद्यपि शेषशिरःकम्पनेन त्रैलोक्यमेव नश्यति तथापि तदुपरिस्थानां हविर्दयाभावाद्ब्रह्माण्डभङ्ग उक्तः ॥ ७६ ॥

कूर्म इति ॥ दीपिकादीपकेनात्र प्रतापवर्णनं सुबोधमेव । अङ्गयष्टिर्दीपिकादण्डः ॥ ७७ ॥

कैलास इति ॥ हे क्षितिपते राघव तस्यास्तव कीर्त्तेस्तटाकः आनन्त्यमस्ति । "तटाकोऽनन्ततायां ना तडागेऽपि भृशाधमे ।" इति धरणिः । कस्याः यस्याः कैलासो निलयः स्थानं तुषारशिखरी हिमवान् विन्दिः उपदेशस्थानम् । "विन्दिः स्तम्भोपवेशनौ" इति विश्वः। हिमरुचिश्चन्द्रोपलः चन्द्रकान्तपाषाणश्च दर्पणो मुकुरः पूर्तकं

क्षीराब्धिर्नवपूर्तकं किमपरं शेषस्तु शेषत्त्विषो
यस्याः स्यादिह राघव क्षितिपते कीर्त्तेस्तटाकस्तव ७८
क्रान्त्वा भूवलयं दशास्यदमन त्वत्कीर्त्तिहंसी गता
सापि ब्रह्ममरालसङ्गमवशात्तत्रैव गर्भिण्यभूत् ।
यात्वा व्योमतरङ्गिणीपरिसरे कुन्दावदातं तया
मुक्तं भाति विशाङ्कुरं ततमिदं शीतद्युतेर्मण्डलम् ॥७९

तटाकः शेषोऽनन्तः शेषत्विषोङ्गदीप्तयः शेषशब्दादन्योऽप्यर्थः। यस्य स्यादिति पाठे तव कीर्त्तेस्तटाकः तडागः स्यात् अस्तु। यस्य तडागस्य कैलासो निलयः नितरां लीयते येन स जलान्तःस्तम्भः हिमवान् विन्दिर्बहिःस्तम्भः गिरीशो रुद्रः सखा तदधिष्ठाता देवः गृहदीर्घिका तदन्तगलकुण्डः चन्द्रः चन्द्रोपलोऽपि दर्पणः तदन्तग्रावाणः चन्द्रोपलेति जात्येकत्वम्। "दर्पणे ग्रावमुकुरो" इति धनञ्जयः। नवपूर्तकं जलयुक्तखानितदेशः। "नव्यपानीययोर्नवः" इति विश्वः। "पूर्तकं जलखानितम्" इति हैमी। शेषदीप्तयः सेतुरेतस्य नास्त्येवानन्तत्वात् ॥ ७८ ॥

क्रान्त्वेति ॥ हे रावणहन्तः स्वकीर्तिरेव हंसी भूवलयं क्रान्त्वा भ्रान्त्वा अत्रात्मपूर्त्यभावात् ब्रह्मलोकं गता ब्रह्मलोकमिति वक्ष्यमाणार्थावगमाद्गृह्यते। सापि तत्र यात्वा गत्वा। ब्रह्मणो यो मरालो हंसस्तत्सङ्गमवशाद्गर्भिण्यभूत्। तया कीर्तिहंस्या गङ्गासमीपे शीतद्युतेर्मण्डलं मुक्तं जनितं तदेतद्भाति। किंभूतं मण्डलं कुन्दवदवदातमुज्ज्वलम्। पुनः किंभूतं विशाङ्कुरं विशाः कमलनालतन्तवः अङ्कुरा नालस्थानीया यस्य तत् ततं विशालम्। यद्वा। विशां प्रजानां कुर आनन्दो यस्मात्तत् लोकाह्लादकमिति। "कुर आनन्दवेदयोः" इति विश्वः। एतेनैतद्ध्वनितं गर्भमोचनोदकं गङ्गाकुन्दाः जन्मकर्माणि विशाङ्कुरं नालश्चन्द्रः पुत्र इति। सर्वं कीर्त्तेरेवोत्पन्ना इति ध्वनिः ॥ ७९ ॥

रामं राम महावीर के वयं गुणवर्णने ।
यत्कीर्तिकामिनीभाले कस्तूरीतिलकं नभः ॥ ८० ॥
लक्ष्मीस्तिष्ठति ते गेहे वाचि भाति सरस्वती ।
कीर्तिः किं कुपिता राम येन देशान्तरं गता ॥ ८१ ॥
राम त्वद्भुजदण्डडिण्डिमडमत्कारप्रतापानल-
ज्वालाजर्जरकीर्तिपारदघटी विस्फोटिता विन्दवः ।
भोगीन्द्राः कति तारकाः कति कति क्षीराब्धयः कत्यपि
प्रालेयाचलपाञ्चजन्यकरकाः कर्पूरकुन्देन्दवः ॥ ८२ ॥
अत्युक्तौ यदि न प्रकुप्यसि मृषा वादं न चेन्मन्यसे
तद्ब्रूमोऽद्भुतकीर्त्तनेन रसना केषां न कण्डूयते ।
राम त्वत्तरुणप्रतापदहनज्वालावलीशोषिताः
सर्वे वारिधयस्ततो रिपुवधूनेत्राम्बुभिः पूरिताः ॥ ८३ ॥
खद्योतद्युतिमातनोति सविता जीर्णोर्णनाभालय-
च्छायामाश्रयते शशी मशकतामायान्ति तारादयः ।

---

रामेति ॥ एतेन कीर्त्तेरानन्त्यमुक्तम् ॥ ८० ॥

लक्ष्मीरिति ॥ अयं व्यञ्जकः अनेन कीर्त्तेर्दूरगामित्वमुक्तम्॥८१॥

रामेति ॥ हे राम त्वद्भुजयोर्डिण्डिमाया डमत्कारेण शब्देन रामो विश्वजयीति घोषणं डिण्डिमा स एव डमत्कारो धमनशब्दः तदुक्तश्चासौ प्रतापानलश्च तस्य ज्वालाभिर्जर्जरा विदलीकृता या कीर्तिरेव पारदघटी सा विस्फोटिता खण्डीकृता। अमी तस्याः विन्दवः जाता इति शेषः । केऽमी भोगीन्द्रा इत्यादयः हिमगिरयः पाञ्चजन्यः शङ्खः करकः शेषो नागः । " शेषेऽपि करकः पुमान् " इति नामशेषे ॥ ८२ ॥ ८३ ॥

खद्योतेति ॥ हे रघुपते इत्थमुक्तरीत्या तव यशो वर्णयतः मम

इत्थं वर्णयतो नभस्तव यशो यातं स्मृतेर्गोचरं
यच्चास्मिन् भ्रमरायते रघुपते वाचस्ततो मुद्रिताः॥८४॥
कृत्वा मेरुमुलूखलं रघुपते वृन्देन दिग्योषितां
स्वर्गङ्गामुसलेन शालय इव त्वत्कीर्त्तयः कण्डिताः।
तासां राशिरसौ तुषारशिखरी तारागणास्तत्कणाः
प्रोद्यत्पूर्णसुधांशुबिम्बमसृणज्योत्स्नाश्च तत्पांसवः ८५॥
समुद्गतौ यत्समकालमेव
यशःप्रतापौ तव पुष्पवन्तौ।

---

नभ इत्यर्थे चकारः इति स्मृतेर्गोचरं स्मरणगोचरमभूदिति। इति किं यस्मिन्नभसि सविता खद्योतदीप्तिमाननोति। शशी जीर्णमर्कटिकागेहप्रभामाश्रयति तारादयो मशकतामायान्ति तच्च नभः शुभ्रे तव यशसि भ्रमरवदाचरति ततः कारणाद्वाचो मुद्रिताः वर्णनसामर्थ्यायोगात् आकाशानन्त्यत्वात् त्वद्यशसोऽप्यानन्त्यमुक्तम् ॥८४॥

कृत्वेति ॥ हे रघुपते दिश एव योषितस्तासां वृन्देन मेरुमेवोलूखलं कृत्वा स्वर्गङ्गैव मुसलं तेन त्वत्कीर्त्तयः शालय इव कलमा इव कण्डिता निस्तुषीकृतास्तासां कीर्तीनामसौ तुषारशिखरी हिमवान् राशिरभूत्। तारागणास्तत्कणाः यथा तण्डुलकणा भवन्ति तद्वत् प्रोद्यंश्चासौ पूर्णसुधांशुश्च तस्य बिम्बस्य या मसृणा निबिडा ज्योत्स्नास्ता एव तत्पांसवः। धूलीस्थानीयाः ॥ ८५ ॥

अथाङ्गदो रामबाहुप्रशस्तिमनुवर्णयति—समुद्गताविति ॥ हे राम यद्यस्मात् समकालमेव एकदैव रावणस्य यशःप्रतापावेव पुष्पवन्तौ सूर्याचन्द्रमसौ तव तुभ्यं संप्रदाने षष्ठी। समुद्गतौ सम्यगुदितौ। "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ।" इत्यमरः। चकारात् अरेः रावणस्य चापो-धनुरेव शेषः शिवः मदो गर्वोऽपि शेषोऽनन्तः एतावपि समकालमेव समुद्गतौ। द्वितीयचकारात् पुनः शेष-

रामारिचापश्च मदश्च शेष-
स्त्वत्खड्गतीर्थं तदनिष्टशान्त्यै ॥ ८६ ॥
किंचित्कोपकलाविलासविभवव्यावल्गमूर्त्ते भुजो
विक्षेपादकरोन्निशाचरबलं प्रत्यर्थिनां यत्पुरः ।
क्रन्दत्फेरु रटत्कफेरु विघटद्दारु स्फुटद्गुग्गुलु
प्रक्रीडत्कपि निःश्वसत्फणिरटद्भिल्लिभ्रमद्वीपि च ॥८७॥

ग्रहणम् । "हर्यनन्ताशिवाः शेषाः" इति शाश्वतः। सूर्याचन्द्रमसौ रुद्रानन्तौ च एकत्र स्थिताः प्रलयमेव कुर्वन्ति तदनिष्टशान्त्यै तेभ्यश्चतुर्भ्यो य अनिष्टस्तस्य शान्त्यै त्वत्खड्गमेव तीर्थं जातम् । त्वत्खड्गमाश्रित्य सर्वे नष्टा इति भावः । प्रतापमदचापास्तु शरीरपर्यन्ता एव तद्व्यतिरेकेण यशसः स्थितिरस्ति तदपि सीतापहरणान्नष्टम् । यद्वा । स्पष्टमेव यत्समकालमेव तुभ्यं रावणः यशःप्रतापौ समुद्गतौ आदिचापो मदश्च समुद्गतौ तेभ्यो यदनिष्टं तच्छान्त्यै त्वत्खड्गतीर्थमेव शेषः समर्थो जातः। तन्नाशोऽप्यवाशिष्यत इति शेषः॥८६॥

किंचिदिति ॥ किंचित्तुच्छा या कोपकला तस्या विलासस्य यो विभवस्तेन व्यावल्गा विगतमावल्गनं यस्याः सा मूर्त्तिर्यस्य तत्संबुद्धौ हे तुच्छकोपविलासागाध राम तव भुजः प्रत्यर्थिनां रावणेन्द्रजिदादीनां विक्षेपात् हननात् निशाचरबलं रक्षःसैन्यं यदिति प्रसिद्धं तत्तथा अकरोत् । कथं तदाह । क्रन्दन्तः फेरवः शिवाः यस्मै तदकरोत् । "फेरुः शिवा सृगालस्त्री" इति विश्वः । सप्तविशेषणैः सैन्यं विशिनष्टि। रटन्तः कफेरवो यस्मै तत्। "कङ्कः कफेरुर्वज्राङ्कः" इति विश्वः। पुनः किंभूतं विघटन्ति भज्यमानानि दारूणि येन तत् तत्पातेन वृक्षपातप्रसङ्गात् । स्फुटत् धूपितो गुग्गुलुः यत्र तच्छिरोग्रहणात् देवीनां महोत्सवे गुग्गुलुधूपः। प्रक्रीडिताः कपयो येन तत् इदं कस्य इदं कस्येति शिरश्चालनं क्रीडनम् । निःश्वसन्नतिभारेण फणी शेषो येन तत् । रटन्त्यो आक्रोशन्त्यो राक्षस्यो राक्षसस्त्रियो

शैत्यं ज्ञानविकारिणो न हि भवेद्वृत्रद्रुहो वाहिनी
यैर्दृष्ट्वा रणलम्पटं भुजयुगं दृष्टं पुनस्तावकम् ।
यस्याश्रित्य बलं स्थलीकृतसरिन्नाथः प्लवङ्गेश्वरैः
क्रान्तो भूरिभये न यत्र शिशिरा यस्यां मयूखा रवेः ८८

रामः—

प्रस्थाप्यतां वानरवीरसेना
तत्कालयोग्याभरणप्रदानैः ।
भुनक्ति राज्यं निजबन्धुवर्गैः
समं ससीतः सहलक्ष्मणश्च ॥ ८९ ॥

---

यस्य तत् । "भिल्ली रक्षःस्त्रियामपि" इति चक्रः । भ्रमन्तो द्वीपिनो व्याघ्रा यस्य तत् । "द्वीपी ना व्याघ्रगृध्रयोः" इति हैमी ॥८७॥

रावणबलमुद्दिश्य तद्विजयिनो रामस्य बलमुद्दिशति—शैत्यमिति ॥ वृत्रद्रुहो महेन्द्रस्य सा वाहिनी सा सेना ज्ञानविकारिणो ज्ञाने रामादात्मनिधनज्ञाने सति विक्रियमाणस्य रावणस्य भुजयुगं दृष्ट्वा पटम् आत्मविस्तारं शैत्यम् औष्ण्याभावम् आनयत्प्रापयामास । "पटच्च विस्तारे" । सा का यस्याम् इन्द्रसेनायां रवेरपि मयूखाः शिशिरा जाताः सैन्यरेणुबहुत्वाच्छादकतया घर्माभावाच्छिशिरत्वम् । पुनः पाश्चात्त्यैरेव रावणादिभिस्तावकं भुजयुगं दृष्टं तेषां त्वद्भुजेन भये इति भयं न भवेन्न किंतु भवेदेव । कर्माणि सप्तमी । कीदृशं भुजयुगम् अरणं भीतशरणं लातीति अरणलं भीताभयदमिति । किं भुजयुगमित्यपेक्षायामाह । प्लवङ्गेश्वरैः सुग्रीवादिभिः यस्य त्वद्भुजयुगस्य बलमाश्रित्य स्थलीकृतश्चासौ सरितां नाथश्च भूरि यथा स्यात्तथा क्रान्त आक्रान्तः गतो वा उत्तीर्ण इत्यर्थः । "क्रमु पादविक्षेपे" इन्द्रजयी रावणः त्वामासाद्य नष्ट इति भावः ॥ ८८ ॥

प्रेति ॥ भुनक्ति अभोजीत् । भूते वर्त्तमानता ॥ ८९ ॥

रामो दाशरथिर्दिवाकरकुले तस्याङ्गना जानकी
नीता सा दशकन्धरेण वनतो लङ्कालयं छद्मना ।
रामेणापि कपीन्द्रसङ्गमवशादम्भोनिधिं लीलया
बध्वा पर्वतमालया रिपुवधादानीय निर्वासिता ॥ ९० ॥

( तत्र त्यक्तसीतो लक्ष्मणो विलपति । )

वने विमोक्तुं जनकस्य कन्यां
श्रोतुं च तस्याः परिदेवितानि ।
सुखेन लङ्कासमरे हतं मा-
मजीवयन्मारुतिरात्तवैरः ॥ ९१ ॥

पशुरपि न मृगो मृगीं मृगेन्द्र-
ध्वनिचकितः प्रसवक्षणे जहाति ।

---

रामं इति॥ अथोक्तानुवादपूर्वकं सीतानिष्कासनमनुवर्णयति। रिपुवधाद्धेतोः निर्वासिता अयोध्यामध्यतो वाल्मीकेराश्रमं प्रस्थापिता सीता । अत्रेयं कथा । प्राप्तराज्येन रामेण कदाचिन्नतकन्धरः पृष्टः मदीयं वृत्तं लोके कीदृगिति मुहुर्मुहुः पृष्टेन तेनोक्तं सर्वं शुभ्रं यशः परंतु चिरं रक्षोगृहस्थसीतासंग्रहात् मलीमसत्वमिति । ततो किंवदन्तीभीतेन रामचन्द्रेण दत्ताज्ञो लक्ष्मणो वाल्मीकेराश्रमं तथा दोहदत्वेन पूर्वमेव वृत्तं त्यक्तवानिति ॥ ९० ॥

वने इति ॥ लङ्कासमरे सुखेन हतं मां मारुतिर्हनूमानजीवयत् अत एवात्तवैर कृतवैर इवेति इदानीमहमेव दुःखेन मरिष्यामीति भावः ९१

पशुरपीति ॥ प्रसवकाले पशुरपि मृगः मृगीं न जहाति। तत्रानुरक्तश्च मृगेन्द्रस्य सिंहस्य शब्देन चकितोऽपि देहपातमङ्गीकृत्य मृगस्तिष्ठति । भीतस्यानुरक्तेरभावात् अयं रामस्त्यक्तवानेव । तत्र विचिकित्सति । अयं रामः अरघुः रघुवंशजन्मा न तेषां निर्दयत्वाभावात् । इयमप्यजानकी जनकजा न तस्यां तद्विरहेण प्राणधा-

अयमरघुरजानकीयमावां
यदि न स जीवति निर्दयोऽद्य वेधाः ॥ ९२ ॥
यद्भग्नं धनुरीश्वरस्य समरे यज्जामदग्न्यो जित-
स्त्यक्ता येन गुरोर्गिरा वसुमतीसेतुः पयोधौ कृतः ।
एकैकं दशकन्धरक्षयकृतो रामस्य किं वर्ण्यते
दैवं वर्णय येन सोऽपि सहसा नीतः कथाशेषताम्॥९३॥
रम्यं श्रीरामचन्द्रप्रबलभुजबृहत्ताण्डवं काण्डशौण्ड-
व्याप्तं ब्रह्माण्डभाण्डे रणशिरसि महानाटकं पाटवाब्धिम्।
पुण्यं भक्त्याञ्जनेयप्रविरचितमिदं यः शृणोति प्रसङ्गा-
न्मुक्तोऽसौ सर्वपापादरिभटविजयी रामवत्सङ्गरेषु॥९४॥
चतुर्दशभिरेवाङ्कैर्भुवनानि चतुर्दश ।

---

रणत्वायोगात्। आवां रामलक्ष्मणयोः मध्ये यदि स राम एकस्तस्याः विरहेन जीवति तर्हि वेधा निर्दयोऽस्ति सीतानिर्वासनात् रामलोकान्तरप्रापकत्वाच्च ॥ ९२ ॥

रामं वर्णयन् दैवे दुर्लंघ्यत्वमाह—यदिति ॥ येन तस्य रामस्यैकैकमसाधारणं वृत्तं किं वर्ण्यते कर्मानन्तत्वानियमात् । अतो दैवमेव वर्णय। येन सोऽप्येतादृग्बलोऽपि रामः सहसैव कथां प्रापितः । रामोऽवतीर्य रावणं हत्वा वैकुण्ठं गत इति कथैवावशिष्टा। एतेन कृतराज्यस्य रामस्य वैकुण्ठगमनमुक्तम् ॥ ९३ ॥

अथैनं महानाटकमुपसंहरन् श्रवणफलमाह—रम्यमिति॥ काण्डाः बाणाः तेषां शौण्डेन प्रावीण्येन व्याप्तं धनुर्वेदवैदग्ध्यं सदिति ब्रह्माण्डमेव भाण्डं पात्रं तत्र पुण्ये रणशिरसि पाटवाब्धि रणमार्गागाधं सुबोधम् ॥ ९४ ॥

चतुर्दशभिरिति ॥ महानाटककर्ता चतुर्दशसङ्ख्याकानि भुवनानि प्रति ब्रह्म मोक्षं धत्ते प्रापयति। एकैकाङ्कवर्णनादेकैकलोकस्य मोक्षः

श्रीमहानाटकं धत्ते केवलं ब्रह्म निर्मलम् ॥ ९५ ॥

रचितमनिलपुत्रेणाथ वाल्मीकिनाब्धौ
निहितममृतबुद्ध्या प्राङ् महानाटकं यत् ।
सुमतिनृपतिभोजेनोद्धृतं तत्क्रमेण
ग्रथितमवतु विश्वं मिश्रदामोदरेण ॥ ९६ ॥

इति श्रीमहानाटके श्रीमद्धनूमद्विरचिते श्रीरामविजयो नाम चतुर्दशोऽङ्कः समाप्तः ॥ १४ ॥

---

स्यात् । किं पुनः सर्वस्य श्रवणस्येति भावः । किंभूतं ब्रह्म केवलमित्युक्तम् ॥ ९५ ॥

रचितमिति ॥ हनुमतः प्राक्कालकर्तृत्वमेतस्याद्यतनीयत्वाभावात् तत्कथयन् पद्यमवतारयति । अमृतबुद्ध्येति । वाल्मीकिना क्रमेण कथनाद्यानुक्रमेण भोजेनोद्धृतम् । अत्रेयं कथा। पूर्वमेतेन नखरटङ्कैर्गिरिशिलासु विलिखितं तत्तु वाल्मीकिना तदेतस्यातिमधुरत्वमाकर्ण्य रामायणप्रचाराभावशङ्कया हनूमान्प्रार्थितः । त्वमेतत्समुद्रे निधेहीति तथेति तेनाब्धौ प्रापितं तदवतारेण भोजेन सुमतिना जलज्ञानैरुद्धृतमिति ॥ ९६ ॥

माथुरकुलसम्भूतः शुद्धचतुर्वेदबोधविख्यातः ।
हमीरसो विजयते कमलपतिरीश्वरप्रेमा ॥ १ ॥
तत्पुत्रेण मयेदं मोहननाम्नार्थरत्नानाम् ।
मञ्जूषा कपिविहिताप्यभिधानबलेन संविवृता ॥ २ ॥
एतद्ग्रन्थार्थोक्तिश्रमैकविज्ञः पतिः प्रियारामः ।
तुष्ट्या निजपदभक्तिं दिशतु दयावानुरूकरः स्वल्पम् ॥ ३ ॥

इति श्रीमिश्रमोहनदासविरचितायां श्रीमद्धनुमन्नाटकदीपिकायां रामविजयो नाम चतुर्दशोऽङ्कः समाप्तः ॥ १४ ॥

---

समाप्तोऽयं ग्रन्थः ।

# काव्यग्रन्थाः।

| | | | | |
|---|---|---|---|---|
| ४६४ | काव्यमंजरी छपके तयार है. | क .... | १–८ | ०–३ |
| ४६५ | गीतगोविन्द सस्कृतटीका और भाषाटीका | क | १–४ | ०–३ |
| ४६६ | माघकाव्य ( शिशुपालवध ) सटीक सपूर्ण | २ | २–८ | ० ६ |
| ४६७ | ,, ,, ९ सर्ग .... | .... | १–८ | ०–४ |
| ४६८ | किरातार्जुनीयकाव्य सटीक* ... | नि | २–० | ० ४ |
| ४६९ | भर्तृहरिशतकत्रयसस्कृतटीका और भाषाटीका | क | १–२ | ० २ |
| ४७० | ,, तथा रफ् .... | क .... | १–० | ०–२ |
| ४७१ | वैराग्यशतक सस्कृतटीका और भाषाटीका. | क | ०–६ | ०–१॥ |
| ४७२ | भोजप्रबध भाषाटीका .... | क .... | १ ४ | ०–२ |
| ४७३ | भोजप्रबन्धकेवलभाषा ग्लेजकागज | क ... | ०–१२ | ० १॥ |
| ४७४ | भोजप्रबध मूलमात्र.... .... | क .... | ०–७ | ० |
| ४७५ | रघुवश मल्लीनाथकृत सजीवनी टीका और टिप्पणी सहित जिल्दबद ग्लेज | २ ... | १–८ | ०–४ |
| ४७६ | ,, ,, तथा रफ .... | २ .... | १–४ | ०–४ |
| ४७७ | रघुवशसटीक बारीक अक्षर सादा | क ... | ०–१२ | ०–२ |
| ४७९ | ,, तथा जिल्दबद | क .... | १–० | ०–२ |
| ४८० | रघुवश सटीक १ सर्गसे ५ सर्गतक | .... | ०–५ | ०–१ |
| ४८१ | कुमारसभव सटीक .... .... | २ .... | १–४ | ०–३ |
| ४८२ | मूर्खशतक भाषाटीका .... | क .... | ०–१ | ० ॥ |
| ४८३ | दशकुमारचरित्र सटीक* .... | नि .... | १–८ | ०–३ |
| ४८४ | गीतगोविन्दमूल . . | क ... | ०–३ | ०–।. |
| ४८५ | हितोपदेश भाषाटीका अतिउत्तम | क .... | १–४ | ०–३ |
| ४८६ | हितोपदेश मूल .... .... .... | २ | ०–८ | ०–१ |
| ४८७ | रामकृष्णविलोमकाव्य .... .... | क | ०–४ | ०–॥ |
| ४८८ | कृष्णकर्णामृत .... .... .... | १ | ०–४ | ०–॥ |
| ४८९ | भामिनीविलास मूल .... .... | १ | ०–४ | ०–॥ |
| ४९० | ,, भाषाटीका .... | २ | १–० | ०–२ |
| ४९१ | मेघदूतकाव्यसटीक .... .... .... | नि | ०–६ | ०–१ |
| ४९२ | मेघदूत सान्वय भाषाटीका .... | क | ०–८ | ०–१ |
| ४९३ | रघुवंश भाषाटीका पदयोजना तात्पर्यार्थ और सरलार्थसहित.... .... .... | २ | ३–८ | ०–६ |
| ४९४ | पद्यावलीअनेकमहानुभावोंके संग्रहीतश्लोक | १ | ०–८ | ०–१ |

| | | | |
|---|---|---|---|
| ४९५ कविरहस्यं सटिप्पणी कं० .... .... | गो | ०–६ | ०–॥ |
| ४९६ कृष्णामृततरङ्गिका सटीक .... .... | गो | ०–५ | ०–॥ |
| ४९७ चौरपञ्चाशिका टिप्पणीसहित .... | गो | ०–२ | ०–॥ |
| ४९८ कलिविडम्बन मूल .... .... .... | गो | ०–२ | ०–॥ |
| ४९९ कलिविडम्बन भाषाटीकासहित .... | १ | ०–४ | ०–॥ |
| ५०० सौन्दर्यलहरी सटिप्पण .... .... | गो | ०–३ | ०–॥ |
| ५०१ कटाक्षशतक सटिप्पण .... .... | गो | ०–३ | ०–॥ |
| ५०२ भावशतक सटिप्पण .... .... .... | गो | ०–३ | ०–॥ |
| ५०३ आर्याशतक सटिप्पण .... .... | गो | ०–२ | ०–॥ |
| ५०४ कामाक्षीस्तुतिशतक सटिप्पण .... | गो | ०–३ | ०–॥ |
| ५०५ अम्बाष्टक सटिप्पण .... .... .... | गो | ०–२ | ०–॥ |
| ५०६ प्रशस्तिकाशिका .... .... .... | गो | ०–३ | ०–॥ |
| ५०७ भक्तिरत्नावली .... .... .... | १ | ०–४ | ०–॥ |
| ५०८ घटकर्परकाव्य भाषाटीका .... .... | क | ०–२ | ०–॥ |
| ५०९ राक्षसकाव्यसंस्कृतटीकाऔरभाषाटीकासहित | २ | ०–२ | ०–॥ |
| ५१० शृंगारतिलक भाषाटीका सहित .... | २ | ०–४ | ०–॥ |
| ५११ शृंगारादिनवरस निरूपण भाषाटीका–( शृङ्गार का अतीव चमत्कारी ग्रन्थ ) .... | २ | ०–६ | ०–१ |
| ५१२ मध्वविजय .... .... .... | नथु | ०–१२ | ०–२ |
| ५१३ अश्वधाटी काव्य भा० टी०.... .... | क | ०–४ | ०–॥ |
| ५१४ राधाविनोद काव्य भाषाटीका .... | क | ०–२ | ०–॥ |
| ५१५ प्रेमलतिका भाषाटीका .... .... | क | ०–२ | ०–॥ |
| ५१६ पञ्चतंत्र भाषाटीका .... .... | क | २–० | ०–४ |
| ५१७ अमरुशतक शंकराचार्यकृत .... .... | | ०–१० | ०–१ |

## अलङ्कारग्रंथाः।

| | | | |
|---|---|---|---|
| ५१८ सुभाषितरत्नाकर .... .... .... | गो | २–० | ०–४ |
| ५१९ कुवलयानन्दसटीक .... .... .... | २ | १–४ | ०–३ |
| ५२० सुभाषितसार भाषाटीका .... .... | क | ०–३ | ०–॥ |
| ५२१ रसतरङ्गिणी टिप्पणीसहित.... .... | गो | ०–८ | ०–१ |
| ५२२ सूक्तावली सुभाषित.... .... .... | क | ०–३ | ०–॥ |
| ५२३ वाग्भटालंकार .... .... .... | २ | ०–५ | ०–॥ |

## नाटकग्रन्थाः ।

५२४ अभिज्ञानशाकुन्तलनाटक सटीक .... नि १-४ ०-२
५२५ हनुमन्नाटक सटीक जिल्द .... .... क १-० ०-२
५२६ रत्नावलीनाटक मूल साटिप्पण ... २ ०-६ ०-१
५२७ रत्नावली भा०टी०(वाक्यरचना मनहरण) २ ०-१० ०-१
५२८ सीतावनवास नाटक ( गद्यपद्य ) .... २ ०-६ ०-१
५२९ इन्द्रसभा नाटक ( राजा इन्द्रकी सभाका
वर्णन रागरागिनियोंमें नाटकाकार ) २ ०-४ ०-॥
५३० अभिमन्युनाटक ( करुणा, वीररसका एक अपूर्वही दृश्य लालाशालिग्रामजीने दर्शायाहै) २ ०-१२ ०-१॥
५३१ प्रल्हादनाटक लालाश्रीनिवासदासकृत क ०-६ ०-१
५३२ मृत्युसभा नाटक .... .... .... क ०-२ ०-॥
५३३ सांगीत शांकुतला नाटक .... .... * ०-८ ०-१
५३४ माधवानलकामकन्दलानाटक-ऐसाप्रीतिप्रवाही ग्रन्थ देखनेहीके योग्य है लालाशालिग्रामजी वैश्यकृत .... .... ... .... २ ०-१२ ०-२
५३५ मोरध्वज नाटक रौद्र वीर सत्यता और भक्ति मार्गी करुणादि रससे परिपूर्ण लालाशालिग्राम १ ०-८ ०-१
५३६ वेणीसंहारनाटक भाषा करुणा हास्य और शान्ति व रौद्र रससे पूर्ण अत्युत्तम पण्डित ज्वालाप्रसादजीकृत .... .... .... १ ०-१० ०-१॥
५३७ विवाहिताविलापनाटक भाषा .... क ०-४ ०-॥
५३८ मुछन्दरसभा नाटक ... .... क ०-३ ०-॥
५३९ मरहटा सरदार और रोशनआरा औरंगजेबकी पुत्रीका प्रेम ... .... क ०-६ ०-१

पुस्तक मिलनेका ठिकाना—

गङ्गाविष्णु श्रीकृष्णदास,

"लक्ष्मीवेङ्कटेश्वर" छापाखाना,

कल्याण-मुंबई.